# ॥ हर्षचरितसंग्रहः ॥

मद्रपुरीस्थराजकीय-आङ्गलकलाशालायां

प्रधानसंस्कृताध्यापकपदमधिष्ठितवतां

श्री सुब्रह्मण्यशास्त्रिमहाशयानाम्

उपोद्घातेन सहितः।

"अभिनवभट्टबाण-शब्दतर्कालंकारविद्याभूषण"

ाण्डितराज" "विद्वत्कवि" बिरुदभाग्भिः वात्स्यचक्रवर्तिभिः

हामहोपाध्यायैः रायंपेट्टै कृष्णमाचार्यैः

समुद्धृत्य संकलितः।

---

चेन्नपुर्यां

श्रीबालमनोरमामुद्रायन्त्रालये

संमुद्रितः।

(पञ्चमं मुद्रणम्)

१९६०

# PREFACE

THERE is no need for commending this new book of mine "Harsha Charita Sangraha" to the public, when it has bestowed generous praise on a similar venture of mine, Kadambari Sangraha, published twenty years ago. My activities in this direction are the outcome of a deep-seated conviction that a sound taste for Sanskrit language and literature can be best cultivated in our youngsters, by adapting in various ways our great classics to their juvenile understanding.

With this object in view, I began publishing the series 'Laghugadya Sangraha' and have brought out the following prose works, Vemabhupala Charitam, Kadambari, Harsha Charitam and Dasakumara Charitam, and poems like Dilipa Charitam and Parvati Parinayam, the last two being adaptations of the famous Raghuvamsam and Kumarasambhavam. These, I am sure, will meet the requirements of the High School Sanskrit pupils.

My Sanskrit Primer known as 'Deva Bhasha Bala Patha,' which I planned as the gateway to my adaptations, mainly consists of extracts, again, from our ancient writers. I think I am to some extent entitled to feel proud, seeing that my innovation has been appreciated in unexpected quarters, by the self-same extracts getting incorporated, though unacknowledged, in other publications.

The descriptive portions of Harsha Charitam, in the original, are in many respects more difficult to adapt and condense, than those of Kadambari. So a good deal of it had to be dropped for making the book suitable as a Middle Grade text. But I have taken care not to omit dialogues and portions useful for historical research.

As I propose publishing separately the first two Ucchvasas and a half of the third, as 'Bhatta Bana Charitam,' in this volume, I include only what might be conveniently styled Harsha Charitam proper.

I cannot sufficiently thank Mahamahopadhyaya S. Kuppuswamy Sastriar Avl., M.A., I.E.S. Professor of Sanskrit and Comparative Philology Presidency College, Madras who, like his predecessor, the late Professor Rao Bahadur M. Rangachariar in the case of my Kadambari Sangraha, helped me considerably by going through the manuscript offering useful suggestions and encouraging me to bring out this edition.

In conclusion, my heartfelt thanks are due to Sri. P. P. S. Sastriar Avl., B. A. (OXON. M. A., M. R. A. S., Superintendent of Sanskrit schools and Colleges, Madras, who in spite of his numerous duties, readily found time to oblige me by furnishing this book with a very valuable introduction.

KUMBAKONAM
5—8—1926.

R. V. KRISHNAMACHARIAR

# INTRODUCTION

The idea of popularising our standard prose works by epitomising them in a convenient form, fully preserving the native vigour of the author's style and omitting unnecessarily long compounds and uninteresting puns and repetitions was first conceived by Pandit R. V. KRISHNAMACHARIAR. Readers of the Kadambari Sangraha know full well how successfully our Pandit has achieved this laborious task. Thanks to the Kadambari Sangraha, the immortal story of Kadambari is now more widely known and better appreciated by scholars and students alike. The learned Pandit has now presented the other great prose work of Bana—the Harsha Charita—in an abridged form as the Harshacharita Sangraha. The story of King Sri Harsha is here retold in an interesting and attractive form in Bana's own words. Much irrelevant matter contained in the first three *Ucchvasas* has been deservedly omitted. The interest of the reader is deftly kept up till the end by piecing together the narrative material from incident to incident with sustained charm.

Bana represents a definite landmark in the history of Sanskrit literature. In his Harsha Charita, he has given us definite information about his contemporaries. By his own statements regarding his patron Sri Harsha, he enables us to find his date with fair certainty. Thanks to the Chinese

pilgrim's authentic account and the historical researches of modern scholars, it is now definitely known that Sri Harsha Deva, king of Kanouj was born in 590 A. D. and ruled over the whole of Northern India from 606 A. D to 647 A. D. Bana was one of his foremost favourites and must therefore have flourished during the first half of the seventh century of the Christian era.

King Sri Harsha Deva whose life-story is presented to us in the Harsha Charita is also a well-known author. The name Harsha Deva appears to have been assumed by at least two kings who have also been authors. The earlier Harsha Deva is a contemporary of the famous Chinese traveller Hiouen Thsang who travelled in India during the first half of the seventh century of the Christian era. This Harsha Deva is to be identified with king Harsha Deva of Kanouj (Kanyakubja and Sthaneswara), the subject mattter of the Harshacharita of Bana. The other Harsha Deva is the famous poet-king of Kashmir who ruled from 1113 A. D. to 1125 A. D. according to the Rajatarangini of Kalhana. King Sri Harsha Deva of Kanouj is best remembered as the author of the three famous dramas, Ratnāvalī, Nāgānanda and Priyadarśikā.

P. P. S. SASTRI, B A. (OXON.),
M.A., M.R.A.S.

॥ श्रीः ॥

# ॥ हर्षचरितसंग्रहः ॥



अस्ति पुण्यकृतामधिवासः, वासवावास इव वसुधामवतीर्णः, शशिकरावदातवृत्तैर्मुक्ताफलैरिव गुणिभिः प्रसाधितः, श्रीकण्ठो नाम जनपदः ॥

तत्र च एकदेश इव सुरराज्यस्य, प्रथमोऽवतार इव ब्रह्मलोकस्य, प्रतिनिधिरिव चन्द्रलोकस्य, नामाभिहार इव कुबेरनगरस्य, स्थाण्वीश्वराख्यो जनपदविशेषः ॥

यः, तपोवनमिति मुनिभिः, यमनगरमिति शत्रुभिः, चिन्तामणिरिति अर्थिभिः, गुरुकुलमिति विद्यार्थिभिः, वसुधारेति विप्रैः अगृह्यत ॥

---

## ॥ विषमपदटिप्पणी ॥

शशिकरवत् चन्द्रकिरणवत् अवदातं शुद्धं वृत्तं चरितं येषां ते तादृशाः । इदं च गुणिपक्षे । मुक्ताफलपक्षे तु शशिकरवत् अवदातानि धवलानि, वृत्तानि वर्तुलानि । शशिकरावदातानि च तानि वृत्तानि चेति कर्मधारयः । गुणिभिः सौशील्यादिगुणयुक्तैः सूत्रयुक्तैश्च । जनानां पदं जनपद इति केचित् । जनैः पद्यते प्राप्यते इति परे । नामाभिहारः नाम्नो विनिमयः, अपहारो वा । पर्यायान्तरमिति शंकरः । वसुधारा धनप्रवाहः ॥

तत्र च साक्षात्सहस्राक्ष इव सर्ववर्णधरं धनुर्दधानः, जलनिधिमय इव मर्यादायाम्, शशिमय इव कलासंग्रहे, गुरुर्वचसि, पृथुरुरसि, विशालो मनसि, जनकस्तपसि, बुधः सदसि, अर्जुनो यशसि, भीष्मो धनुषि, राजा पुष्पभूतिरिति नाम्ना बभूव ॥

तस्य च शैशवादारभ्य अन्यदेवताविमुखी भगवति भक्तिसुलभे भवे भूयसी भक्तिरभूत्। अकृतवृषभध्वजपूजाविधिर्न स्वप्नेऽप्याहारमकरोत्। अजम् अजरम् अमरगुरुम् असुरपुररिपुं पशुपतिं प्रपन्नः, अन्यदेवताशून्यममन्यत त्रैलोक्यम् ॥

तथा च परममाहेश्वरः स भूपालः, लोकतः शुश्राव भगवन्तं दाक्षिणात्यं भैरवाचार्यनामानं महाशैवम्। आचकाङ्क्ष च सर्वथाऽप्यस्य दर्शनम् ॥

अथ कदाचित्पर्यस्ते वासरे, अन्तःपुरवर्तिनं राजानमुपसृत्य प्रतीहारी विज्ञापितवती—"देव, द्वारि परिव्राट् आस्ते कथयति च—भैरवाचार्यवचनाद्देवमनुप्राप्तोऽस्मि इति" इति ॥

---

सहस्रम् अक्षीणि यस्य सः सहस्राक्षः। सर्ववर्णधरं सकलब्राह्मणादिजातिपालकम्, सकलरक्तपीतादिवर्णधारकं च। मर्यादा आचारः, सीमा च कलाः चतुष्षष्ठिः, षोडश च। गुरुः महान्, बृहस्पतिश्च। पृथुः विपुलः तन्नामा राजा च। विशालः विस्तृतः, कश्चन राजा च। जनकः उत्पादकः विदेहराजश्च। बुधः पण्डितः, चन्द्रपुत्रश्च। अर्जुनः धवलः, मध्यमपाण्डवश्च भीष्मः भयंकरः, भीष्माचार्यश्च। महेश्वरः भक्तिः भजनीयः यस्य सः माहेश्वरः। शैव इत्यपि एवमेव। दक्षिणा भवः दाक्षिणात्यः। पर्यस्तः परिणतः, गतो वा। परित्यज्य सर्वं व्रजतीति परिव्राट् संन्यासी ॥

राजा तु तच्छ्रुत्वा सादरम् "क्वासौ ? आनयात्रैव । प्रवेशयैनम्" इत्यब्रवीत् । तथा चाकरोत्प्रतीहारी ॥

न चिराच्च प्रविशन्तं प्रांशुम् आजानुभुजं भैक्षक्षामं पृथूत्तमाङ्गम्, ईषदावक्रघोणम्, अंसावलम्बिना योगपट्टकेन विरचितवैकक्षकम्, धातुरसारुणेन कर्पटेन कृतोत्तरासङ्गं मस्करिणम् अद्राक्षीत् ॥

क्षितिपतिरप्युपगतमुचितेन चैनमादरेणाग्रहीत् । आसीनं च पप्रच्छ—"क्व भैरवाचार्यः" इति । सादरेण नरपतिवचनेन मुदितमनास्तु परिव्राट्, तम् उपनगरं सरस्वतीतटवनावलम्बिनि शून्यायतने स्थितमाचचक्षे । भूयश्चाबभाषे—"अर्चयति महाभागं भगवानाशीर्वचसा" इत्युक्त्वा च उपनिन्ये भैरवाचार्यप्रहितानि रत्नवन्ति पञ्च राजतानि पुण्डरीकाणि ॥

नरपतिस्तु प्रियजनप्रणयभङ्गकातरो दाक्षिण्यमनुरुध्यमानः, ग्रहणलाघवं च लङ्घयितुमसमर्थः, दोलायमानेन मनसा स्थित्वा कथं कथमपि तानि जग्राह । जगाद च—"सर्वफलप्रसवहेतुः

---

प्रांशुः उन्नतः । भिक्षाणा समूहः भैक्षम् । योगपट्टकः योगसाधनं दृढस्थूलस्वल्पदीर्घवस्त्रखण्डः । "पृष्ठजान्वोः समायोगे वस्त्रं वलयवद्दृढम् । परिवेष्ट्य यदूर्ध्वज्ञुस्तिष्ठेत्तद्योगपट्टकम् ।॥" वैकक्षकम् उपवीतवत् वक्षसि तिर्यक् क्षिप्तं माल्यम् । कर्पटः वस्त्रम् । मलिनत्वादिदुष्टजीर्णवस्त्रखण्ड इति केचित् । प्रस्वेदादिमार्जनार्थहस्तस्थवस्त्रखण्ड इत्यन्ये । उत्तरे ऊर्ध्वभागे आसज्यते इति उत्तरासङ्गः उत्तरीयम् । मस्करः वेणुः (दण्डः) अस्यास्तीति मस्करी संन्यासी । "मस्करमस्करिणौ वेणुपरिव्राजकयोः ।" राजतानि रूप्यमयानि । दोलेव आचरत् दोलायमानम्, चञ्चलम् ॥

शिवभक्तिरियं नो मनोरथदुर्लभानि फलति फलानि। येनैवमस्मासु प्रीयते भगवान्भुवनगुरुर्भैरवाचार्यः। श्वो द्रष्टास्मि भगवन्तम्" इत्युक्त्वा च मस्करिणं व्यसर्जयत्। अनया च वार्तया परां मुदमवाप॥

अपरेद्युश्च प्रातरेवोत्थाय वाजिनमधिरुह्य समुच्छ्रितश्वेतातपत्रः समुद्धूयमानधवलचामरयुगलः कतिपयैरेव राजपुत्रैः परिवृतः, भैरवाचार्यं द्रष्टुं प्रतस्थे। गत्वा च किंचिदन्तरं तदीयमेव अभिमुखम् आपतन्तम् अन्यतमं शिष्यम् अद्राक्षीत्। अप्राक्षीच्च—'क भगवानास्ते' इति। सोऽकथयत्—"अस्य जीर्णमातृगृहस्योत्तरेण बिल्ववाटिकामध्यास्ते" इति। गत्वा च तं प्रदेशमवततार। प्रविवेश च बिल्ववाटिकाम्॥

अथ महतः कार्पटिकबृन्दस्य मध्ये, प्रातरेव स्नातम्, दत्ताष्टपुष्पिकम्, अनुष्ठिताग्निकार्यम्, व्याघ्रचर्मण्युपविष्टम्,

प्रतस्थे "समवप्रविभ्यः स्थः" इत्यात्मनेपदम्। "एनपा द्वितीया" इत्यत्र एनपेति योगविभागमाश्रित्य एनबन्तयोगे षष्ठ्यपि भवतीति वैयाकरणाः। अतः मातृगृहस्य उत्तरेणेत्यत्र षष्ठी। "ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही चैव माहेन्द्री चामुण्डा सप्त मातरः॥" वाटिकाम् अध्यास्ते "अधिशीङ्स्थासां कर्म।" कर्पटैः जीर्णवस्त्रैः चरन्ति इति, कर्पटं तत्त्वं विदन्ति इति वा कार्पटिकाः भिक्षवः। अष्टानां पुष्पाणां समाहारः अष्टपुष्पी, सैव अष्टपुष्पिका। तानि च पुष्पाणि चम्पकमल्लिकादीनि। पूर्वोत्तरग्रन्थपर्यालोचनायामेवं व्याख्यैव ज्यायसी। "(चन्दन) प्रभृति गन्धप्रधानं पार्थिवम्, अर्घ्यस्नानादिकं रसप्रधानम् आप्यम्, प्रदीपाभरणप्रभादि रूपप्रधानं तैजसम्, अनुलेपनप्रभृति स्पर्शप्रधानं वायवीयम्, सुषिरातोद्यगीतादिकं शब्दप्रधानम् आकाशीयम्, अनुध्यानं मानसम्, अस्ति सर्वत्रैवेश्वर इति निश्चयो बौद्धम्,

विद्युत्कपिलेन आत्मतेजसा शिष्यलोकं लिम्पन्तम्, अबहुभाषिणं मन्दहासिनं सर्वोपकारिणं कुमारब्रह्मचारिणम् , धाम धर्मस्य, पत्तनं पूततायाः, शालां शीलस्य, क्षेत्रं क्षमायाः, आकरं करुणायाः, समाजं सौजन्यस्य, भगवन्तं साक्षादिव विरूपाक्षं भैरवाचार्यं ददर्श ॥

भैरवाचार्यस्तु दूरादेव राजानं दृष्ट्वा प्रत्युज्जगाम। समर्पित-श्रीफलोपायनश्च गम्भीरया गिरा स्वस्तिशब्दमकरोत् । नरपति-रपि दूरावनतः प्रणाममभिनवं चकार । आचार्योऽपि 'आ-गच्छ । अत्रोपविश' इति शार्दूलचर्मात्मीयमदर्शयत् ॥

उपदर्शितप्रश्रयस्तु राजा, मधुरसमर्थां प्रवर्तयन्वाचं व्या-जहार—"भगवन्, नार्हसि माम् अन्यनृपस्खलितैः खलीकर्तुम् । अभूमिरयमुपचाराणाम् । अलमतियन्त्रणया । दूरस्थितोऽपि मनोरथशिष्योऽयं जनो भवताम् । माननीयं च गुरुवन्नोल्लङ्घन-मर्हति गुरोरासनम् । आसतां च भवन्त एवात्र" इति व्याहृत्य परिजनोपनीते वाससि निषसाद । भैरवाचार्योऽपि प्रीत्या अन-तिक्रमणीयं नृपवचनमनुवर्तमानः पूर्ववत्तदेव व्याघ्राजिनम-भजत ॥

---

अहमेवेश्वर इति आहंकारिकम्" इति अष्टपुष्पिकां शंकरो व्याचष्टे । "अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः । सर्वभूतदया पुष्पं क्षमा पुष्पं विशेषतः ॥ ज्ञानं पुष्पं तपः पुष्पं ध्यानं पुष्पं तथैव च । सत्यमष्टविधं पुष्पं विष्णोः प्रीति-करं भवेत्" इत्येवम् अष्टपुष्पिकामपरे व्याचक्षते । श्रीफलं बिल्वफलम् । यन्त्रणा निर्बन्धः ॥

आसीने च सराजके परिजने शिष्यजने च, समुचित मर्घ्यादिकं चक्रे। क्रमेण च नृपमाधुर्यापहृतान्तःकरण उवाच—"तात, अतिनम्रतैव ते कथयति गुणानां गौरवम्। सकलसंपत्पात्रमसि। विभवानुरूपास्तु प्रतिपत्तयः। जन्मनः प्रभृत्यदत्तदृष्टिरस्मि स्वापतेयेषु। धनैरविक्रीतं कचित् शरीरकमस्ति। भैक्षरक्षिताः सन्ति प्राणाः। दुर्गृहीतानि कतिचिद्विद्यन्ते विद्याक्षराणि भगवच्छिवभट्टारकपादसेवया समुपार्जिता कियत्यपि संनिहित पुण्यकणिका। स्वीक्रियताम्—यदत्रोपयोगार्हम्" इति॥

राजा तु तं प्रत्यवादीत्—"भगवन्, अनुक्तेष्वपि शरीरादिषु साधूनां स्वामिन एव प्रणयिनः। युष्मद्दर्शनादुपार्जितमेवापरिमितं कुशलजातम्" इति। विविधाभिश्च कथाभिश्चिरं स्थित्वा गृहमगात्॥

अन्यस्मिन् दिवसे भैरवाचार्योऽपि राजानं द्रष्टुं ययौ तस्मै च राजा सान्तःपुरं सपरिजनं सकोशमात्मानं निवेदितवान्। स च विहस्य "तात, क विभवाः? क च वयं वनवर्धिताः?" इत्युक्त्वा स्थित्वा च कंचित्कालं जगाम॥

परिव्राट् तेनैव क्रमेण पञ्च पञ्च राजतानि पुण्डरीकाण्युपायनीचकार। एकदा तु श्वेतकर्पटावृतं किमप्यादाय प्राविशत्, प्रविश्य च पूर्ववत्स्थित्वा मुहूर्तमब्रवीत्—"महाभाग, भवन्तमाह भगवान्, यथा—'अस्मच्छिष्यः पातालस्वामिनामा ब्राह्मणः

---

गौरवम् उत्कर्षः, भारवत्त्वं च। भाराक्रान्तो हि नम्रो भवति स्वपतौ साधु स्वापतेयं धनम्। "पथ्यतिथिवसतिस्वपतेर्ढञ्" ॥

तेन ब्रह्मराक्षसहस्तादपहृतो महासिः अट्टहासनामा । सोऽयं भवद्भुजयोग्यो गृह्यताम्' इति" इत्यभिधाय, अपहृतकर्पटावच्छादनात्परिवारादाचकर्ष शरद्गगनमिव पिण्डतां नीतम्, कालिन्दीप्रवाहमिव स्तम्भितजलम्, कुलमित्रं कोपस्य, अपत्यं मृत्योः, आगमनमार्गं लक्ष्म्याः, कृपाणम् ॥

अवनिपतिस्तु तं गृहीत्वा करेण सुचिरं ददर्श । संदिदेश च—"वक्तव्यो भगवान्—परद्रव्यग्रहणावज्ञादुर्विदग्धमपि हि मे मनो युष्मद्विषये न शक्नोति वचनव्यतिक्रममाचरितुम्" इति । परिव्राट् तु गृहीते तस्मिन्, परितुष्टः "स्वस्ति भवते । साधयामः" इत्युक्त्वा निरयासीत् ॥

अथ व्रजत्सु दिवसेषु, एकदा, भैरवाचार्यो राजानमुपह्वरे सोपग्रहमवादीत्—"तात, स्वार्थालसाः परोपकारदक्षाश्च प्रकृतयो भवन्ति भव्यानाम् । भवादृशां चार्थिदर्शनं महोत्सवः । भूमिरसि सर्वलोकमनोरथानाम् । येनाभिधीयसे । श्रूयताम्—भगवतो महाकालहृदयनाम्नो महामन्त्रस्य कृष्णस्रगम्बरानुलेपनाकल्पेन कल्पकथितेन महाश्मशाने जपकोट्या कृतपूर्वसेवोऽस्मि । तस्य वेतालसाधनावसाना सिद्धिः । असहायैश्च सा दुरापा । त्वं चालमस्मै कर्मणे । त्वयि च गृहीतभरे भविष्यन्त्यपरे सहायास्त्रयः । एकः स एवास्माकं टीटिभनामा बालमित्रं मस्करी, यो

---

उपग्रहः अभ्यर्थना, अनुवृत्तिर्वा । भव्याः योग्याः । आकल्पः वेषः । अलं पर्याप्तः । "नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च" इति चतुर्थी ॥

भवन्तमुपतिष्ठते। द्वितीयः स पातालस्वामी। अपरो मच्छिष्य एव कर्णतालनामा द्राविडः। यदि साधु मन्यसे, ततो नीयतामयं दिङ्नागहस्तदीर्घो गृहीताट्टहासो निशामेकामेकदिङ्मुखार्गलतां बाहुः" इति॥

कृतवचसि च तस्मिन्, नरेन्द्रः समभाषत—"भगवन्, परमनुगृहीतोऽस्मि अनेन शिष्यजनसामान्येन निदेशेन। कृतपरिग्रहमिवात्मानमवैमि" इति। ननन्द च तेन नरेन्द्रव्याहृतेन भैरवाचार्यः। चकार च संकेतम्—"अस्यामेव आगामिन्याम-सितपक्षचतुर्दशीक्षपायाम् इयत्यां वेलायाम् अमुष्मिन्महाश्मशान-समीपभाजि शून्यायतने शस्त्रद्वितीयेन आयुष्मता द्रष्टव्या वयम्" इति। अथातिक्रान्तेष्वहस्सु प्राप्तायां च तस्यामेव कृष्णचतुर्दश्यां शैवेन विधिना दीक्षितः क्षितिपो नियमवानभूत। कृताधिवासं च संपादितगन्धधूपमाल्यादिपूजं खड्गमट्टहासमकरोत्॥

ततः परिणते दिवसे, राजा सान्तःपुरं परिजनं वञ्चयित्वा खड्गमादाय एकाकी नगरान्निरगात्। अगाच्च तमुद्देशम्॥

अथ प्रत्युज्जग्मुस्ते त्रयः संनद्धाः स्नाताः स्रग्विणो बद्धासि-धेनवः टीटिभकर्णतालपातालस्वामिनः। निवेदितवन्तश्चात्मानम्।

---

उपतिष्ठते उपश्लिष्यति। "उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम्" इत्यात्मनेपदम्। अधिवासः वासना। "नियमदिवसादाद्ये अहनि यथाशास्त्रं विधिना मन्त्रन्यासादिः। पर्वपूजेति यावत्" इति शंकरः। एकाकी असहायः। "एकादाकिनिच्चासहाये"। संनद्धाः कवचिनः। "संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः" इत्यमरः। असिधेनुः शस्त्री॥

अवनिपतिस्तु "कोऽत्र कः" इति त्रीनपृच्छत् । आचचक्षिरे च स्वं स्वं नाम त्रयोऽपि ते । तैरेव चानुगम्यमानो जगाम तां समुपकल्पितसर्वोपकरणां निःशब्दां च गभीरां च भीषणां च साधनभूमिम् अवनिपतिः ॥

तस्यां च भस्मना लिखितस्य महतो मण्डलस्य मध्ये स्थितम्, रक्तचन्दनानुलेपिनो रक्तस्रगम्बराभरणस्य उत्तानशयस्य शवस्योरसि उपविश्य जातजातवेदसि मुखकुहरे प्रारब्धाग्निकार्यम्, कृष्णोष्णीषम्, कृष्णाङ्गरागम्, कृष्णप्रतिसरम्, कृष्णवाससम्, मुखेन किमपि जपन्तं कृष्णतिलाहुतिकरं भैरवाचार्यमपश्यत् । उपसृत्य चाकरोन्नमस्कारम् । अभिनन्दितश्च तेन स्वव्यापारमन्वतिष्ठत् ॥

अत्रान्तरे पातालस्वामी शातक्रतवीमाशामङ्गीचकार, कर्णतालः कौबेरीम्, परिव्राट् प्राचेतसीम् । राजा तु त्रैशङ्कवेन ज्योतिषा अङ्कितां ककुभमलंकृतवान् ॥

एवं चावस्थितेषु तेषु दिक्पालेषु विस्रब्धं कर्म साधयति भैरवं भैरवाचार्ये, अतिचिरं कृतकोलाहलेषु निष्फलप्रयत्नेषु प्रत्यूहकारिषु शान्तेषु कौणपेषु, गलत्यर्धरात्रसमये, मण्डलस्य नातिदवीयसि उत्तरेण अकस्मात्क्षितिरदीर्यत । सहसैव च तस्मा-

---

उत्तानः शेते उत्तानशयः । जाते जाते विद्यते, जातं जातं वेत्ति वा जातवेदाः । उष्णम् ईषते हिनस्ति इति उष्णीषं शिरोवेष्टः । प्रत्यूहः विघ्नः । रात्रेः अर्धम् अर्धरात्रः । दूरः, दवीयान्, दविष्ठः । उत्तरेणेत्यव्ययम् उत्तरदेशे ॥

द्विवरात्कुवलयश्यामलः पुरुष उज्जगाम । जगाद च विहस्य "भ
विद्याधरीश्रद्धाकामुक, किमयं विद्यावलेपः सहायमदो वा
यदस्मै जनाय अविधाय बलिं बालिश इव सिद्धिमभिलषसि
का ते दुर्बुद्धिरियम् ? एतावता कालेन क्षेत्राधिपतिर्नागतस्ते श्रोत्रे
पकण्ठं श्रीकण्ठनामा नागोऽहम् ? भूनाथोऽप्ययमनाथस्तपस्वि
यस्त्वादृशैः शैवापशदैरुपकरणीक्रियते । सहस्वेदानीं सहामुन
दुर्नरेन्द्रेण दुर्नयस्य फलम्" इति । अभिधाय च निष्ठुरैः प्रकोष्ठ
प्रहारैस्त्रीनपि टीटिभप्रभृतीनभिमुखं प्रधावितान् सशरीरावरण
कृपाणानपातयत् ॥

अथ नरनाथः सावज्ञमवादीत्—"रे काकोदर काक
मयि स्थिते राजहंसे न जिह्रेषि बलिं याचितुम् ? अमीभिः किं
वा परुषभाषितैः । भुजे वीर्यं निवसति, न वाचि । प्रतिपद्यस्व
शस्त्रम् । अयं न भवसि । अगृहीतहेतिष्वशिक्षितो मे भुज
प्रहर्तुम्" इति ॥

नागस्तु अनादृततरम् "एहि । किं शस्त्रेण । भुजाभ्यामे
भनज्मि भवतो दर्पम्" इत्यभिधायास्फोटयामास । नरपतिरपि
निरायुधमायुधेन युधि लज्जमानो जेतुम् उत्सृज्य सचर्मफलक
मसिम्, अर्धोरुकस्योपरि बबन्ध बाहुयुद्धाय कक्ष्याम् । युयुधा
च शिलास्तम्भैरिव पतद्भिर्बाहुदण्डैः शब्दमयमिव कुर्वाणौ भुव

विद्याधर्यां विद्याधर्या वा श्रद्धया आदरेण कामुकः विद्याधरीश्रद्धा
कामुकः । बालिशः मूर्खः । अपशदः अधमः । ऊरोः अर्धे काशते इ
अर्धोरुकं चण्डातकम्, लंगोट् इति भाषायाम् ॥

तौ । न चिराच्च पातयामास भूतले भुजंगं भूपतिः । जग्राह च केशेषु । उच्चखान च शिरश्छेत्तुमट्टहासम् । अपश्यच्च वैकक्ष-कमालान्तरेणास्य यज्ञोपवीतम् । उपसंहृतशस्त्रव्यापारश्चावादीत्—"दुर्विनीत, अस्ति ते दुर्विनयनिर्वाहबीजमिदम् । यतो विस्रब्ध-मेवाचरसि चापलानि" इत्युक्त्वा उत्ससर्ज तम् ॥

अनन्तरं च सहसैवातिबहुलां ज्योत्स्नां ददर्श । शरदि विकसतां कमलवनानामिव च घ्राणावलेपिनामामोदमजिघ्रत् । झटिति च नूपुरशब्दमश्रृणोत् । व्यापारयामास च शब्दानुसारेण दृष्टिम् ॥

अथ करतलस्थितस्याट्टहासस्य मध्ये तटितमिव नीलजल-धरोदरे स्फुरन्तीं तामरसहस्तां मृणालकोमलैरवयवैः कमलसं-भवत्वमनक्षरमाचक्षाणां स्त्रियमपश्यत् । असंभ्रान्तश्च पप्रच्छ—"भद्रे कासि ? किमर्थं वा दर्शनपथमागतासि ?" इति । सा तु स्त्रीजनविरुद्धेनावष्टम्भेन अभिभवन्तीवाभाषत तम्—"वीर, विद्धि मां नारायणोरःस्थलीविहारहरिणीम् असिधाराजलकम-लिनीं श्रियम् । अपहृतास्मि तवामुना शौर्यरसेन । याचस्व । ददामि ते वरमभिलषितम्" इति ॥

वीराणां तु अपुनरुक्ताः परोपकाराः । यतो राजा तां प्रणम्य स्वार्थविमुखो भैरवाचार्यस्य सिद्धिं ययाचे । लक्ष्मीस्तु देवी प्रीततरहृदया भूपालम् 'एवमस्तु' इत्यब्रवीत् । अवादीच्च पुनः—"अनेन सत्त्वोत्कर्षेण भगवच्छिवभट्टारकभक्त्या चासा-

---

चापलम् अविमृश्यकरणम् । दर्शनस्य पन्थाः दर्शनपथः ॥

धारण्या भवान् भुवि सूर्याचन्द्रमसोस्तृतीय इवाविच्छिन्न महतो राजवंशस्य कर्ता भविष्यति। यस्मिन्नुत्पत्स्यते सर्वद्वीपानां भोक्ता हरिश्चन्द्र इव हर्षनामा चक्रवर्ती" इति वचसोऽतिरोबभूव ॥

भूमिपालस्तु तदाकर्ण्य हृदयेन अतिमात्रमप्रीयत। भैरवाचार्योऽपि तस्या देव्यास्तेन वचसा कर्मणा च सम्यगुपपादिते सद्य एव कुन्तली किरीटी कुण्डली हारी केयूरी मेखली मुद्गरखड्गी च भूत्वा अवाप विद्याधरत्वम्। प्रोवाच च—"राजन् अदूरव्यापिनः फल्गुचेतसामलसानां मनोरथाः। सतां तु भुवि विस्तारवत्यः स्वभावेनैवोपकृतयः। स्वप्नेऽप्यसंभावितां दातुमिमां दक्षिणां क्षमः कोऽन्यो भवन्तमपहाय। संपत्कणिकामपि प्राप्य तुलेव लघुप्रकृतिरुन्नतिमायाति। त्वदीयैर्गुणैरुपकरणीकृतस्य त्वत्त एव च लब्धात्मलाभस्य निर्लज्जता इयमस्य मूढहृदयस्य। तदिच्छामि येन केनचित्कार्यलवोपपादनोपयोगेन स्मरयितुमात्मानम्" इति। प्रत्युपकारदुष्प्रवेशास्तु भवन्ति धीराणां हृदयावष्टम्भाः। यतस्तं राजा "भवत्सिद्धयैव परिसमाप्तकृत्योऽस्मि साधयतु मान्यो यथासमीहितं स्थानम्" इति प्रत्याचचक्षे ॥

तथोक्तश्च भूभुजा जिगमिषुः सुदृढं समालिङ्गय टीटिभादीन्, सास्रेण चक्षुषा वीक्षमाणः क्षितिपतिं पुनरुवाच—"तात, किं ब्रवीमि? यामीति, न स्नेहसदृशम्। त्वदीयाः प्राणा इति, पुनरुक्तम्। निष्कारणस्तवोपकार इति, अनुवादः। स्मर्तव्या

---

सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ। गन्तुमिच्छुः जिगमिषुः ॥

वयमिति, आज्ञा । सर्वथा कृतघ्नालापेषु असज्जनकथासु च चेतसि कर्तव्योऽयं स्वार्थनिष्ठुरो जनः" इति । एवमभिधाय गगनतलमुत्पपात, ययौ च सीमन्तितग्रहग्रामः सिद्ध्युचितं धाम ॥

श्रीकण्ठोऽपि "राजन्, पराक्रमक्रीतः कर्तव्येषु नियोगेनानुग्राह्यो ग्राहितविनयोऽयं जनः" इत्यभिधाय, राज्ञानुमोदितस्तदेव भूयो भूविवरं विवेश ॥

नरपतिस्तु क्षीणभूयिष्ठायां क्षपायां त्रीनपि टीटिभादीन् गृहीत्वा नागयुद्धव्यतिकरमलीमसानि शुचिनि वनवापीपयसि प्रक्षाल्याङ्गानि नगरं विवेश । अन्यस्मिन्नहनि च तेषामात्मशरीरानन्तरं स्नानभोजनाच्छादनादिना प्रीतिमकरोत् ॥

कतिपयदिवसापगमे च परिव्राट् भूभुजा वार्यमाणोऽपि वनं ययौ । पातालस्वामिकर्णतालौ तु शौर्यानुरक्तौ तमेव सिषेवाते । कथान्तरेषु च अन्तरान्तरा समादिष्टौ विचित्राणि भैरवाचार्यचरितानि शैशववृत्तान्तांश्च कथयन्तौ तेनैव सार्धं जरां जग्मतुः ॥

॥ इति भट्टबाणविरचिते हर्षचरिते राजवंशवर्णनं नाम

तृतीय उच्छ्वासः ॥

---

अन्तरा अन्तरा मध्ये मध्ये ॥

## ॥ चतुर्थ उच्छ्वासः ॥

अथ तस्मात्पुष्पभूतेः, लक्ष्मीपुरःसरो रत्नसंचय इव रत्नाकरात्, दुर्जयबलसनाथो हरिवंश इव शूरात्, निर्जगाम राजवंशः। यस्मात् प्रतापाक्रान्तभुवनाः किरणा इव तेजोनिधेः, इच्छाफलदायिनः कल्पतरव इव नन्दनात्, अजायन्त राजानः ॥

तेषु चैवमुत्पद्यमानेषु, क्रमेण उदपादि प्रतापशील इति प्रथितापरनामा प्रभाकरवर्धनो नाम राजाधिराजः ॥

तस्य च पार्वतीव शंकरस्य, लक्ष्मीरिव लोकगुरोः, रोहिणीव कलावतः, अरुन्धतीव महामुनेः, हंसमयीव गतिषु, परपुष्टमयीव आलापेषु, चक्रवाकमयीव पतिप्रेम्णि, यशःपुष्टिरिव चारित्रस्य, हृदयतुष्टिरिव धर्मस्य, शमस्यापि शान्तिरिव, विनयस्यापि विनीतिरिव, धैर्यस्यापि धृतिरिव, यशोवती नाम महादेवी प्राणानां प्रणयस्य विस्रम्भस्य धर्मस्य सुखस्य च भूमिरभूत् ॥

निसर्गत एव स नृपतिरादित्यभक्तो बभूव। प्रतिदिनमुदये दिनकरस्य, स्नातः सितदुकूलधारी धवलकर्पटप्रावृताशिराः प्राङ्मुखः क्षितौ जानुभ्यां स्थित्वा कुङ्कुमपङ्कानुलिप्ते मण्डलके पवित्रपद्मरागपात्रीनिहितेन रक्तकमलषण्डेन अर्चां ददौ। अजपञ्च

---

रत्नाकरात्, शूरादिति पुष्पभूतेरपि विशेषणम्। रत्नाकरः समुद्रः, श्रेष्ठवस्तूनां निवासभूतश्च। शूरो नाम कश्चन राजा। लक्ष्म्याः पुरःसरः, लक्ष्मीसहित इत्यर्थः। बहुव्रीहिस्तु चिन्त्यः। बलं सैन्यम्, बलो बलरामश्च ॥

प्रत्युषसि मध्यंदिने दिनान्ते च प्रयतेन मनसा मन्त्रमादित्य-हृदयम् ॥

भक्तजनानुरोधविधेयानि तु भवन्ति देवतानां मनांसि—स राजा कदाचिद्ग्रीष्मसमये हर्म्यस्य पृष्ठे सुष्वाप । पार्श्वे चास्य द्वितीयशयने देवी यशोवती शिश्ये । परिणतप्रायायां तु श्यामायाम्, देवी यशोवती सहसैव "आर्यपुत्र, परित्रायस्व परित्रायस्व" इति भाषमाणा उदतिष्ठत् ॥

अथ तेन ध्वनिना दग्ध इव श्रवणयोः एकपद एव निद्रां तत्याज राजा । निद्रया कोपेन चातिलोहिताभ्यां लोचनाभ्यां पाटलयन्पर्यन्तान् आशानाम्, "देवि, न भेतव्यम् न भेतव्यम्" इत्यभिदधानो वेगेनोत्पपात । सर्वासु च दिक्षु विक्षिप्तचक्षुर्यदा नाद्राक्षीत्किंचिदपि, तदा पप्रच्छ तां भयकारणम् ॥

अथ सा समभाषत—"आर्यपुत्र, जानामि स्वप्ने—भगवतः सवितुर्मण्डलान्निर्गत्य द्वौ कुमारकौ तेजोमयौ गृहीतशस्त्रौ रुधिरेण स्नातौ, कन्ययैकया च सुषुम्णरश्मिनिर्गतया अनुगम्यमानौ क्षितितलमवतीर्णौ । तौ च मे विलपन्त्याः शस्त्रेणोदरं विदार्य प्रवेष्टुमारब्धौ । प्रतिबुद्धास्मि चार्यपुत्रं विक्रोशन्ती वेपमानहृदया" इति ॥

एतस्मिन्नेव च कालक्रमे प्रथयन्निव स्वप्नफलम् उपतोरणं रराण प्रभातशङ्खः । भाविनीं भूतिमिवाभिदधाना दध्वनुरमन्दं दुन्दुभयः । जय जयेति प्रबोधमङ्गलपाठकानामुच्चैर्वाचोऽश्रूयन्त ॥

नरपतिस्तु तच्छ्रुत्वा प्रीयमाणेन अन्तःकरणेन तामवादीत्—"देवि, मुदोऽवसरे विषीदसि। समृद्धास्ते गुरुजनाशिषः। पूर्णा नो मनोरथाः। परिगृहीतासि कुलदेवताभिः। प्रसन्नस्ते भगवान् अंशुमाली। न चिरेणैव अतिगुणवदपत्यत्रयलाभेन आनन्दयिष्यति भवतीम्" इति। अवतीर्य च यथाक्रियमाणाः क्रियाश्चकार। यशोवत्यपि तुतोष तेन पत्युर्भाषितेन॥

ततः समतिक्रान्ते कस्मिंश्चित्कालांशे, देव्यां च यशोवत्यां देवो राज्यवर्धनः प्रथममेव संबभूव गर्भे। गर्भस्थितस्यैव च यस्य यशसेव पाण्डुतामादत्त जननी। गुणगौरवक्लान्तेव गात्रमुद्वोढुं न शशाक। उदरे तनयेन हृदये च भर्त्रा तिष्ठता द्विगुणितामिव लक्ष्मीमुवाह॥

अवतीर्णे च दशमे मासि असूत देवं राज्यवर्धनम्। मासमेकं दिवसमिव महोत्सवमकरोन्नरपतिः॥

अथान्यस्मिन्नतिक्रान्ते कस्मिंश्चित्काले, नभसि, देव्या देवक्या इव चक्रपाणिर्यशोवत्या हृदये गर्भे च सममेव संबभूव हर्षः। चतुर्णामपि महार्णवानाम् एकीकृतेनाम्भसा स्नातुमस्या वाञ्छा बभूव। संनिहितेष्वपि मणिदर्पणेषु, मुखमुत्खाते खड्गपट्टे वीक्षितुं व्यसनमासीत्। पञ्जरकेसरिषु चक्षुररमत॥

ततश्च प्राप्ते ज्येष्ठामूलीये मासि बहुलासु बहुलपक्षद्वादश्यां

---

नभसि श्रावणमासे। व्यसनम् आसक्तिः। ज्येष्ठामूलीये ज्यैष्ठे मासि। "ज्येष्ठामूलीयमिच्छन्ति मासमाषाढपूर्वजम्।" बहुलाः कृत्तिकाः। बहुलपक्षः कृष्णपक्षः॥

व्यतीते प्रदोषसमये समारुरुक्षति क्षपां यौवने, सहसैवान्तःपुरे समुदपादि कोलाहलः स्त्रीजनस्य । निर्गत्य च ससंभ्रमं स्वयमेव यशोवत्या हृदयनिर्विशेषा धात्र्याः सुता सुयात्रेति नाम्ना राज्ञः पादयोर्निपत्य "देव, दिष्ट्या वर्धसे द्वितीयसुतजन्मना" इति व्याहरन्ती पूर्णपात्रं जहार ॥

अत्रान्तरे स्वयमेवानाध्माता अपि तारमधुरं शङ्खा विरेसुः । अताडितोऽपि जुगुञ्ज अभिषेकदुन्दुभिः । अनाहतान्यपि मङ्गलतूर्याणि रेणुः । यज्वनां मन्दिरेषु प्रजज्वलुरनिन्धना वैतानवह्नयः ॥

तत्क्षण एव च शुक्लवाससो ब्रह्ममुखाः समुपतस्थिरे द्विजातयः । साक्षाद्धर्म इव शान्त्युदकफलहस्तस्तस्थौ पुरः पुरोधाः । प्रावर्तत च विगतराजकुलस्थितिः समस्वामिपरिजनो निर्विशेषबालवृद्धो दुर्ज्ञेयमत्तामत्तप्रविभागः पुत्रजन्मोत्सवो महान् ॥

एवं च वृत्ते तस्मिन्महोत्सवे, शनैः शनैः पुनरप्यतिक्रामति काले, धात्रीकराङ्गुलिलग्ने पञ्चषाणि पदानि प्रयच्छति हर्षे, षष्ठं वर्षमवतरति च राज्यवर्धने, देवी यशोवती गर्भेण अधत्त नारायणमूर्तिरिव वसुधां देवीं राज्यश्रियम् । पूर्णेषु च प्रसवदिवसेषु चन्द्रलेखामिव प्रतिपत्, गौरीमिव मेना प्रसूतवती दुहितरम् ॥

---

समुदपादि समुत्पन्नः । धात्री उपमाता । "हर्षादुत्सवकाले यदलंकाराम्बरादिकम् । आकृष्य गृह्यते पूर्णपात्रं पूर्णानकं च तत् ॥" पञ्च वा षड्वा पञ्चषाणि ॥

अस्मिन्नेव तु काले यशोवत्या भ्राता, सुतमष्टवर्षदेशीयं पीनप्रकोष्ठप्रतिष्ठितपुष्पलोहवलयं शैशवेऽपि सावष्टम्भं बीजमिव वीर्यद्रुमस्य भण्डिनामानम् अनुचरं कुमारयोरर्पितवान्। राजपुत्रावपि सकलजीवलोकहृदयानन्ददायिनौ तेन प्रकृतिदाक्षिणेन मधुमाधवाविव मलयमारुतेन उपेतौ नितरां रेजतुः ॥

क्रमेण च अपरेणेव भ्रात्रा प्रजानन्देन सह वर्धमानौ यौवनमवतेरतुः । स्थिरोरुस्तम्भौ पृथुप्रकोष्ठौ दीर्घभुजार्गलौ विकटोरःकवाटौ प्रांशुसालाभिरामौ महानगरसंनिवेशाविव सर्वलोकाश्रयक्षमौ बभूवतुः ॥

अथ चन्द्रसूर्याविव ज्योत्स्नायशःप्रतापाक्रान्तभुवनौ, इन्द्रोपेन्द्राविव नागेन्द्रगतौ, राज्यवर्धन इति हर्ष इति सर्वस्यामेव पृथिव्याम् आविर्भूतशब्दप्रादुर्भावौ स्वल्पीयसैव कालेन द्वीपान्तरेष्वपि प्रकाशतां जग्मतुः ॥

एकदा च तावाहूय, भुक्तवान् अभ्यन्तरगतः पिता सस्नेहमवादीत्—"वत्सौ, प्रथमं राज्याङ्गं दुर्लभाः सद्भृत्याः । दर्पण-

---

अष्टौ वर्षाणि यस्य सः अष्टवर्षः, ईषदसमाप्तः अष्टवर्षः अष्टवर्षदेशीयः । पुष्पलोहो नाम रत्नविशेषः । अवष्टम्भो गर्वः । दाक्षिणः अनुकूलः, दाक्षिणात्यश्च । स्थिरोरुस्तम्भावित्यादीनि विशेषणानि समासभेदाश्रयणेनोभयत्रापि योज्यानि । ऊरू सक्थिनी । उरवः बृहन्तः । प्रकोष्ठः कूर्पराधोभागः, कक्ष्या च । प्रकृष्टः कोष्ठः गृहमध्यमिति वा । सालः वृक्षविशेषः, प्राकारश्च । ज्योत्स्नावत् यशः, यश इव ज्योत्स्ना च । प्रतापः कोशदण्डजं तेजः, आतपश्च । उपेन्द्रः विष्णुः । नागः गजः, सर्पश्च । गतं गमनम्, गतः प्राप्तश्च । द्विर्गताः आपः येषु तानि द्वीपानि ॥

मिवानुप्रविश्य आत्मीयां प्रकृतिं संक्रामयन्ति पल्लवकाः । स्वप्ना इव मिथ्यादर्शनैरसद्बुद्धिं जनयन्ति विप्रलम्भकाः । अतः सर्वैर्दोषाभिषङ्गैरसंगतौ, बहुधा उपधाभिः परीक्षितौ, शुची विनीतौ विक्रान्तौ अभिरूपौ मालवराजपुत्रौ कुमारगुप्तमाधवगुप्तौ अस्माभिर्भवतोरनुचरत्वार्थमिमौ निर्दिष्टौ । अनयोरुपरि भवद्भ्यामपि नान्यपरिजनसमवृत्तिभ्यां भवितव्यम्" इत्युक्त्वा, तयोराह्वानाय प्रतीहारमादिदेश ॥

न चिरात् द्वारदेशनिहितलोचनौ राज्यवर्धनहर्षौ, प्रतीहारेण सह प्रविशन्तम् अग्रतो ज्येष्ठम् अष्टादशवर्षवयसं नात्युच्चं नातिखर्वं तेजस्विनमपि शीलेनाह्लादकेन सवितारमिव शशिनान्तर्गतेन विराजमानं कुमारगुप्तम्, पृष्ठतस्तस्य कनीयांसम् अतिप्रांशुतया गौरतया च मनःशिलाशैलमिव संचरन्तं माधवगुप्तं च ददृशतुः ॥

प्रविश्य च तौ दूरादेव नमश्चक्रतुः । स्निग्धनरेन्द्रदृष्टिनिर्दिष्टाम् उचितां भूमिं भेजाते । मुहूर्तं च स्थित्वा भूपतिरादिदेश तौ—"अद्यप्रभृति भवद्भ्यां कुमारावनुवर्तनीयौ" इति । "यथाज्ञापयति देवः" इति राज्यवर्धनहर्षौ प्रणेमतुः, तौ च पितरम् । ततश्चारभ्य क्षणमपि निमेषोन्मेषाविव चक्षुर्गोचरात् अनपयान्तौ,

---

पल्लवकाः कोमलानि किसलयानि, कुत्सिता विटाश्च । मिथ्यादर्शनम् अलीकवस्तुप्रदर्शनम्, असच्छास्त्रं च । अभिषङ्गः पराभवः, आक्रान्तिरिति यावत् । संपर्क इत्यन्ये । उपधा राज्ञा धर्मार्थकामभयैरमात्यादेः परीक्षणम् । अभिरूपौ सुन्दरौ, बुधौ वा ॥

उच्छ्वासनिःश्वासाविव नक्तंदिवमभिमुखस्थितौ, भुजाविव सतत-पार्श्ववर्तिनौ कुमारयोस्तौ बभूवतुः ॥

अथ राज्यश्रीरपि नृत्यगीतादिषु विदग्धासु सखीषु सकलासु कलासु च प्रतिदिनमुपचीयमानपरिचया, शनैः शनैरवर्धत। परिमितैरेव दिवसैर्यौवनमारुरोह। निपेतुरेकस्यां तस्यां भूभुजां सर्वेषां दृष्टयः। दूतप्रेषणादिभिश्च तां ययाचिरे राजानः ॥

कदाचित्तु राजा अन्तःपुरप्रासादस्थितो महादेवीं जगाद— "देवि, तरुणीभूता वत्सा राज्यश्रीः। यौवनारम्भ एव च कन्यकानामिन्धनीभवन्ति पितरः संतापानलस्य। केनापि कृताधर्म्या नाभिमता मे स्थितिरियम्—यत् अङ्गसंभूतानि अङ्कलालितानि अपरित्याज्यानि अपत्यकानि अकाण्ड एव अगत्या असंस्तुतैर्नीयन्ते। को हि नाम सहते विरहमपत्यानाम्। किं क्रियते। तथापि गृहगतैरनुगन्तव्या एव लोकवृत्तयः। प्रायेण च सत्स्वप्यन्येषु वरगुणेष्वभिजनमेवानुरुध्यन्ते धीमन्तः। धरणीधराणां च मूर्ध्नि स्थितो माहेश्वरो मौखरिवंशः। तत्रापि तिलकभूतस्य अवन्तिवर्मणः सूनुरग्रजो ग्रहवर्मा नाम ग्रहपतिरिव गां गतः पितुरन्यूनो गुणैरेनां प्रार्थयते। यदि भवत्या अपि मतिरनुमन्यते, ततस्तस्मै दातुमिच्छामि ॥"

इत्युक्तवति भर्तरि, महादेवी प्रत्युवाच—"आर्यपुत्र, संवर्धनमात्रोपयोगिन्यो धात्रीनिर्विशेषा भवन्ति खलु मातरः

---

धर्मात् अनपेता धर्म्या, न धर्म्या अधर्म्या। अकाण्डे अनवसरे सहसेति यावत्। संस्तुताः परिचिताः। अभिजनः कुलम्। गां भूमिम् ॥

कन्यकानाम् । दाने तु प्रमाणमासां पितरः । केवलं कृपाकृतविशेषः सुदूरेण तनयस्नेहादतिरिच्यते दुहितृस्नेहः । यथा यावज्जीवम् आवयोः आर्तितां न प्रतिपद्यते, तथा आर्यपुत्र एव जानाति” इति ॥

राजा तु जातनिश्चयो दुहितृदानं प्रति, समाहूय सुतावपि विदितार्थावकार्षीत् । शोभने च दिवसे ग्रहवर्मणा कन्यां प्रार्थयितुं प्रेषितस्य पूर्वागतस्यैव प्रधानदूतपुरुषस्य करे सर्वराजकुलसमक्षं दुहितृदानजलमपातयत् ॥

जातमुदि कृतार्थे च गते तस्मिन्, आसन्नेषु च विवाह-दिवसेषु, उद्दामदीयमानताम्बूलपटवासकुसुमप्रसाधितसर्वलोकम्, क्षितिपालैश्च स्वयमाबद्धकक्ष्यैः प्रारब्धविविधव्यापारम्, आ सूर्योदयाच्च प्रविष्टाभिः सतीभिः सुरूपाभिः समन्तात्सीमन्तिनी-भिर्व्याप्तम्, दुकूलैश्च निश्वासहार्यैः स्पर्शानुमेयैः सर्वतः संछादि-तम्, पटवितानैर्मण्डपैः स्तम्भैश्च समुज्ज्वलम्, रमणीयं च औत्सुक्यदं च मङ्गल्यं चासीद्राजकुलम् ॥

देवी तु यशोवती विवाहोत्सवपर्याकुलहृदया, हृदयेन भर्तरि, कुतूहलेन जामातरि, स्नेहेन दुहितरि, उपचारेण निम-न्त्रितस्त्रीषु, आदेशेन परिजने, शरीरेण संचरणे, चक्षुषा कृताकृत-प्रत्यवेक्षणेषु, आनन्देन महोत्सवे, एकापि बहुधा विभक्तेवाभ-वत् । भूपतिरपि सत्यप्याज्ञासंपादनदक्षे मुखेक्षणपरे परिजने, समं पुत्राभ्यां दुहितृस्नेहविक्लवः सर्वं स्वयमकरोत् ॥

---

पटवासः गन्धचूर्णम् । मङ्गलम् अर्हति, मङ्गले साधु वा मङ्गल्यम् ॥

एवं च तस्मिन्नविधवामय इव भवति राजकुले, मङ्गलमय इव जायमाने जीवलोके, पटहमय इव कृते अन्तरिक्षे, गण्यमान इव जनाङ्गुलीभिः, आलोक्यमान इव मार्गध्वजैः, प्रत्युद्गम्यमान इव मङ्गल्यवाद्यप्रतिशब्दकैः, परिष्वज्यमान इव वधूसखीहृदयैः राजगाम विवाहदिवसः। प्रातरेव प्रतीहारैः समुत्सारितनिखिलानिबद्धलोकं विविक्तमक्रियत राजकुलम् ॥

अथ प्रतीहारः प्रविश्य नृपसमीपम्, "देव, जामातुरन्तिकात्ताम्बूलदायकः पारिजातकनामा संप्राप्तः" इत्यभिधाय, स्वाकारं युवानमदर्शयत्। राजा तु तम् आगतजामातृनिवेदनागतं ज्ञात्वा दर्शितादरः कृतसत्कारम् "यामिन्याः प्रथमे यामे विवाहकालात्ययकृतो यथा न भवति दोषः" इति संदिश्य प्रतीपं प्राहिणोत् ॥

अथ समवसिते वासरे, स्फुरति संध्यारागे, उज्जिहाने ज्योतिर्गणे, आजगाम नक्षत्रमालामण्डितमुखीं करिणीमारूढः, पुरोधावमानैः पादातैः वाजिनां बृन्दैः करिणां घटाभिश्च आपूरितदिग्भागः प्रत्यासन्नलग्नो ग्रहवर्मा ॥

राजा तु तम् उपद्वारमागतं चरणाभ्यामेव राजचक्रानुगम्यमानः ससुतः प्रत्युज्जगाम। अवतीर्णं च तं कृतनमस्कारं मन्मथमिव माधवः प्रसारितभुजो गाढमालिलिङ्ग। यथाक्रमं परिष्वक्तराज्यवर्धनहर्षं च हस्ते गृहीत्वा अभ्यन्तरं निन्ये। स्वनिर्विशेषासनदानादिना चोपचारेणैनमुपचचार ॥

---

अनिबद्धः संबन्धरहितः। विविक्तं विजनं पूतं वा। "सा तु नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिका।" पदातीनां समूहाः पादातानि। माधवः वसन्तः ॥

नचिराच्च गम्भीरनामा नृपतेः प्रणयी विद्वान् द्विजन्मा ग्रह-वर्माणमुवाच—"तात, त्वां प्राप्य चिरात्खलु राज्यश्रिया घटितौ तेजोमयौ सोमसूर्यवंशाविव पुष्पभूतिमुखरवंशौ । प्रथममेव कौस्तुभमणिरिव गुणैः स्थितोऽसि हृदये देवस्य । इदानीं तु शशीव शिरसा परमेश्वरेणासि वोढव्यो जातः" इति ॥

एवं वदत्येव तस्मिन्, नृपमुपसृत्य मौहूर्तिकाः—"देव, समासीदति लग्नवेला । व्रजतु जामाता कौतुकगृहम्" इत्यूचुः । अथ नरेन्द्रेण "उत्तिष्ठ ; गच्छ" इति गदितो ग्रहवर्मा प्रवि-श्यान्तःपुरं जामातृदर्शनकुतूहलिनीनां स्त्रीणां पतितानि लोचन-सहस्राणि लङ्घयन् आससाद कौतुकगृहद्वारम् । निवारितपरि-जनश्च प्रविवेश ॥

अथ तत्र कतिपयाप्तप्रियसखीस्वजनप्रमदाप्रायपरिवाराम्, अरुणांशुकावगुण्ठितमुखीम्, चन्दनधवलतनुलताम्, रतिमिव पुनर्जाताम, अधोमुखीम, मुहुर्मुहुः कृतमुखोन्नमनप्रयत्नं च सखी-जनं निर्भर्त्सयन्तीं वधूमपश्यत् ॥

परिहासस्मेरमुखीभिश्च नारीभिः कौतुकगृहे यद्यत्कार्यते जामाता, तत्तत्सर्वमतिपेशलं चकार । कृतपरिणयानुरूपवेषपरि-ग्रहां गृहीत्वा करे वधूं निर्जगाम । जगाम च नवसुधाधवलाम्, उपकुशानुनिहितानुपहतहरितकुशां वेदीम् । आरुरोह च तां

---

राज्यश्रीः राज्यलक्ष्मीः, प्रभाकरवर्धनसुता च । परमेश्वरः हरः, राजा च । मुहूर्तं विदन्ति मौहूर्तिकाः । कौतुकगृहं प्रतिसरबन्धनगृहम् ॥

दिवमिव सज्योत्स्नः शशी । समुत्ससर्प च वेल्लितारुणशिखापल्लवस्य शिखिनः कुसुमायुध इव रतिद्वितीयो रक्ताशोकस्य समीपम् । हुते च हुतभुजि प्रदक्षिणं बभ्राम । पात्यमाने च लाजाञ्जलौ नखमयूखधवलिततनुः अदृष्टपूर्ववधूवररूपविस्मयस्मेर इव अदृश्यत विभावसुः ॥

अत्रान्तरे निर्वेदनविकारं रुरोद वधूः । उदश्रुविलोचनानां च बान्धववधूनाम् उदपादि महानाक्रन्दः । परिसमापितवैवाहिकक्रियाकलापस्तु जामाता वध्वा समं प्रणनाम श्वशुरौ । प्रविवेश च द्वारपक्षलिखितरतिपतिदैवतम्, मङ्गलप्रदीपैः प्रकाशितम्, सोपधानेन स्वास्तीर्णेन शयनेन शोभमानम्, शयनशिरोभागस्थितेन च निद्राकलशेन राजतेन विराजमानं वासगृहम् ॥

स्थित्वा च श्वशुरकुले आनन्दमयानि दश दिनानि, शीलेनामृतमिव श्वश्रूहृदये वर्षन्, कथं कथमपि विसर्जितो नृपेण वध्वा सह स्वदेशमगमत् ॥

॥ इति भट्टबाणविरचिते हर्षचरिते चक्रवर्तिजन्मवर्णनं नाम
चतुर्थ उच्छवासः ॥

---

शिखापल्लवाः ज्वालाग्राणि, अग्रपर्णानि च । शिखी अग्निः, वृक्षश्च । श्वश्रूश्च श्वशुरश्च श्वशुरौ । वासगृहं भोगागारम् ॥

## ॥ पञ्चम उच्छ्वासः ॥

अथ कदाचिद्राजा राज्यवर्धनं कवचहरमाहूय हूणान् अपरिमितबलानुयातम् उत्तरापथं प्राहिणोत् ॥

प्रयान्तं च तं देवो हर्षः कतिचित्प्रयाणकानि तुरंगमैरनुव- प्रविष्टे च कैलासप्रभाभासिनीं ककुभं भ्रातरि, वर्तमानो ासि विक्रमरसानुरोधिनि, तुषारशैलोपकण्ठेषु क्रीडन्मृग- कतिपयान्यहानि बहिरेव व्यलम्बत। चकार च स्वल्पी- ा दिवसैर्निःश्वापदान्यरण्यानि ॥

एकदा तु वासतेय्यास्तुरीये यामे, प्रत्युषस्येव स्वप्ने दुर्नि- ःवहुतभुजा दह्यमानं केसरिणमद्राक्षीत्। तस्मिन्नेव दाव- समुत्सृज्य शावकान्, उत्प्लुत्य चात्मानं पातयन्तीं सिंही- [। आसीच्चास्य चेतसि—"लोके हि लोहेभ्यः कठिनतराः ेहमया बन्धनपाशाः। यदाकृष्टास्तिर्यञ्चोऽपि एवमाच- इति ॥

प्रबुद्धस्य चास्य मुहुर्मुहुर्दक्षिणेतरदक्षि पस्पन्दे। गात्रेषु देव वेपथुर्विपप्रथे। निर्निमित्तमेव अन्तर्बन्धनस्थानाच्च- हृदयम्। अकारणादेव च अजायत गरीयसी दुःखा- । किमिदमिति च समुत्पन्नविविधविकल्पविमथितमतिः

---

वचं हरति स्वीकरोतीति कवचहरः। "वयसि च" इत्यच्प्रत्ययः ॥

अपगतधृतिः चिन्तावनमितवदनः स्तिमिततारकेण चक्षुषा समुद्भिद्यमानस्थलकमलिनीवनामिव चकार क्षणं क्षोणीम् । आरोहति च हरितहये मध्यमहः, भवनमागत्य, वेत्रपट्टिकामधिशयानः साशङ्क एव तस्थौ ॥

अथ दूरादेव लेखगर्भया चीरचीरिकया रचितमुण्डमालम्, वर्त्मनि शून्यहृदयतया स्खलन्तम्, श्रमातपाभ्याम् आरोप्यमाणकायकालिमानं कुरङ्गकनामानमायान्तमद्राक्षीत् । दृष्ट्वा चाभिद्यत हृदयेन ॥

कुरङ्गकस्तु कृतप्रणामः समुपसृत्य प्रथममाननलग्नं विषादमुपनिन्ये, पश्चाल्लेखम् । तं च देवो हर्षः स्वयमेवादायावाचयत् । "कुरङ्गक, किं मान्द्यं तातस्य" इति चाभ्यधात् । स च "देव, दाहज्वरो महान्" इत्याचचक्षे । तच्चाकर्ण्य सहसा सहस्रधेवास्य हृदयं पफाल । कृताचमनश्च जनयितुरायुष्कामः, आत्मपरिबर्हमशेषं ब्राह्मणसादकरोत् । अभुक्त एव उच्चचाल । "दापय वाजिनः पर्याणम्" इति च पुरःस्थितं शिरःकृपाणं बिभ्राणं बभाण युवानम् । वेपमानहृदयश्च ससंभ्रमप्रधावितपरिवर्धकोपनीतमारुह्य तुरङ्गम् एकाक्येव प्रावर्तत ॥

प्रस्थितस्य चास्य प्रदक्षिणेतरप्रयान्तो विनाशमुरःस्थितं राजसिंहस्य हरिणाः प्रकटयांबभूवुः । हृदयेन च पितृस्नेहाहितम्रदिम्ना तत्तदुपेक्षमाणः, बहुयोजनसंपिण्डितमध्वानमेकेनैवाह्ना समलङ्घयत् ॥

उपलब्धनरेन्द्रमान्द्यवार्ताविषण्ण इव नष्टतेजसि अधोमुखीभवति भगवति भानुमति, भण्डिप्रमुखेण प्रणयिना राजपुत्रलोकेन बहुशो विज्ञाप्यमानोऽपि नाहारमकरोत् । वहन्नेव च निन्ये निशाम् ॥

अन्यस्मिन्नहनि मध्यंदिने, विगतजयशब्दम्, अस्तमिततूर्यनादम्, उपसंहृतगीतम्, उत्सारितोत्सवम्, अप्रसारितापणपण्यम्, अमङ्गलैरिव परिगृहीतम्, यातुधानैरिव विध्वस्तम्, कलिकालेनेव कबलितम्, पापपटलैरिव संछादितम्, शून्यमिव सुप्तमिव मुषितमिव मूर्च्छितमिव स्कन्धावारं समाससाद ॥

प्रविशन्नेव च विपणिवर्त्मनि कुतूहलाकुलबहुलबालकपरिवृतम्, ऊर्ध्वयष्टिविष्कम्भवितते वामहस्तवर्तिनि भीषणमहिषाधिरूढप्रेतनाथसनाथे चित्रवति पटे परलोकव्यतिकरम् इतरकरकलितेन शरकाण्डेन कथयन्तं यमपट्टिकं ददर्श । तेनैव च गीयमानं श्लोकमश्रृणोत्—

"मातापितृसहस्राणि पुत्रदारशतानि च ।
युगे युगे व्यतीतानि कस्य ते कस्य वा भवान् ॥"

इति । तेन चाधिकतरमवदीर्यमाणहृदयः क्रमेण राजद्वारं प्रतिषिद्धसकललोकप्रवेशं ययौ ॥

तुरगादवतीर्णश्च अभ्यन्तरान्निष्क्रामन्तं सुषेणनामानं वैद्यकुमारमप्राक्षीत्—"सुषेण, अस्ति तातस्य विशेषः, न वा ?" इति । सोऽब्रवीत्—"नास्तीदानीम् । यदि भवेत् कुमारं दृष्ट्वा" इति । मन्दं मन्दं द्वारपालैः प्रणम्यमानश्च, दीयमानसर्वस्वम्,

पूज्यमानकुलदैवतम्, प्रारब्धामृतचरुपचनक्रियम्, प्रवर्त्यमान-ग्रहशान्ति, प्रयतविप्रप्रस्तुतसंहिताजपम्, दुःखदीनवदनेन च प्रघणेषु बद्धमण्डलेन उपांशुव्याहृतैः केनचिच्चिकित्सकदोषानुद्भावयता केनचिद्दुःस्वप्नानावेदयता केनचित्पिशाचवार्तां विवृण्वता केनचित्कार्तान्तिकादेशान्प्रकाशयता अन्येन दैवमुपालभमानेन अपरेण धर्माय कुप्यता बाह्यपरिजनेन कथ्यमानकष्टपार्थिवावस्थं राजकुलं विवेश। बाष्पपरिप्लुतलोचनेन च पितृपरिजनेन वीक्ष्यमाणः क्वाथानां सर्पिषां तैलानां च गन्धमाजिघ्रन् अवाप तृतीयं कक्ष्यान्तरम् ॥

तत्र चातिनिःशब्दे गृहावग्रहणीग्राहितबहुवेत्रिणि त्रिगुणतिरस्करिणीतिरोहितवीथीपथे पिहितपक्षद्वारके परिहृतकवाटरटिते घटितगवाक्षरक्षितमरुति दूयमानपरिचारके चरणताडनस्वनत्सोपानप्रकुपितप्रतीहारे निभृतसंज्ञानिर्दिश्यमानसकलकर्मणि प्रविष्टकतिपयप्रणयिनि गम्भीरज्वरारम्भभीतभिषजि दुर्मनायमानमन्त्रिणि धवलगृहे स्थितम्, अनवरतपरिवर्तनैस्तरङ्गिणि शयनीये विचेष्टमानम्, गोचरीकृतं ग्लान्या, दष्टं दुःखासिकया, क्रोडीकृतं कालेन, पीतमिव पीडाभिः, निगीर्णमिव वैवर्ण्येन, आदित्सितं दैवेन, घ्रातमनित्यत्वेन, अभिभूयमानमभावेन, दत्तावकाशं क्लेशस्य, निवासं वैमनस्यस्य, समीपे कालस्य अन्तिके अन्त्योच्छ्वासस्य द्वारि दीर्घनिद्रायाः जिह्वाग्रे जीवितेशस्य वर्तमानम्, विरलं वाचि, चलितं चेतसि, प्रचुरं प्रलापे, जितं जृम्भिकाभिः, अनुबद्धमनुबन्धिकाभिः, पार्श्वोपविष्टया अनवरतरो-

दनोच्छूननयनया मुहुर्मुहुः "आर्यपुत्र स्वपिषि ?" इति व्याहरन्त्या देव्या यशोवत्या शिरसि वक्षसि च स्पृश्यमानं पितरमद्राक्षीत् ॥

दृष्ट्वा च अन्तकपुरवर्तिनमेव पितरममन्यत । निराकृत इव चान्तःकरणेन क्षणमासीत् । अवधूतश्च धैर्येण, पावकमयमिव हृदयमुद्वहन्नाविन्दत कर्तव्यम् । पस्पर्श च हृदयेन भियम्, उत्तमाङ्गेन च गाम् ॥

अवनिपतिस्तु दूरादेव दृष्ट्वातिदयितं तनयम्, तदवस्थोऽपि निर्भरस्नेहावर्जितः प्रधावमानो मनसा प्रसार्य भुजौ "एह्येहि" इत्याह्वयन् शरीरार्धेन शयनादुदगात् । ससंभ्रममुपसृतं चैनं विनयावनम्रम् उन्नमय्य बलादुरसि निवेश्य विशन्निव प्रेम्णा निशाकरमण्डलमध्यम्, मज्जन्निवामृतमये महासरसि, अङ्गैरङ्गानि पीडयन् विस्मृतज्वरसंज्वरः सुचिरमालिलिङ्ग । कथं कथमपि चिराद्विमुक्तं विगतनिमेषनिश्चलेन चक्षुषा व्यलोकयत् । पस्पर्श च पुनःपुनर्वेपथुमता पाणितलेन । क्षयक्षामकण्ठश्च कृच्छ्रादिवावादीत्—"वत्स, कृशोऽसि" इति । भण्डिस्त्वकथयत्—"देव, तृतीयमहः कृताहारस्यास्याद्य" इति ॥

तच्छ्रुत्वा बाष्पवेगनिगृह्यमाणाक्षरं कथं कथमप्यायतं निःश्वस्य उवाच—"वत्स, जानामि त्वां पितृप्रियम् अतिमृदुहृदयम् । ईदृशेषु विधुरयति धीमतोऽपि धियम् अतिदुर्धरो बान्धवस्नेहः सर्वप्रमाथी । अतो नार्हस्यात्मानं शुचे दातुम् ।

उद्दामदाहज्वरदग्धोऽपि दह्ये खल्वहमनेन आयुष्मदाधिना। निशितमिव शल्यं तक्ष्णोति मां त्वदीयस्तनिमा। सुखं च राज्यं च वंशश्च प्राणाश्च त्वयि मे स्थिताः। यथा मम, तथा सर्वासां प्रजानाम्। त्वद्विधानां पीडाः पीडयन्ति सकलमेव भुवनतलम्। नह्यल्पपुण्यभाजां वंशमलंकुर्वन्ति भवादृशाः। फलमस्यनेकजन्मान्तरोपार्जितस्य अकलुषस्य कर्मणः। करतलगतमिव कथयन्ति चतुर्णामप्यर्णवानामाधिपत्यं ते लक्षणानि। त्वज्जन्मनैव कृतार्थोऽस्मि। निरभिलाषोऽस्मि जीवितव्ये। भिषगनुरोधः पाययति मामौषधम्। अपि च, सर्वप्रजापुण्यैः सकलभुवनतलपरिपालनार्थम् उत्पत्स्यमानानां भवादृशां जन्मग्रहणोपायः पितरौ। प्रजाभिस्तु बन्धुमन्तो राजानः, न ज्ञातिभिः। तदुत्तिष्ठ। कुरु पुनरेव सर्वाः क्रियाः। कृताहारे च त्वयि अहमपि स्वयमुपयोक्ष्ये पथ्यम्" इति ॥

एवमभिहितस्य चास्य नितरां शोकानलः संदुधुक्षे। क्षणमात्रं च स्थित्वा पित्रा पुनराहारार्थमादिश्यमानो धवलगृहादवततार। चकार च चेतसि—"सामान्योऽपि तावच्छोकः सोच्छ्वासं मरणम्, अभस्मीकरणोऽग्निप्रवेशः, अनुपरतस्यैव नरकवासः। किमुत विशेषाश्रितः। किमत्र करवाणि" इति ॥

राजपुरुषेणाधिष्ठितश्च गत्वा स्वधाम, धूममयानिव कृताश्रुपातान् अग्निमयानिव जनितहृदयदाहान् विषमयानिव दत्तमूर्च्छावेगान् कतिचित्कवलानगृह्णात् ॥

आचामंश्च अगृहीतताम्बूल एवोत्ताम्यता मनसा अस्ताभिलाषिणि सवितरि सर्वानाहूय वैद्यानुपह्वरे "किमस्मिन्नेवंविधे

विधेयमधुना" इति विषण्णहृदयः पप्रच्छ । ते तु व्यज्ञपयन्—"देव, धैर्यमवलम्बस्व । कतिपयैरेव वासरैः पुनः स्वां प्रकृतिमापन्नं स्वस्थं श्रोष्यसि पितरम्" इति ॥

तेषां तु भिषजां मध्ये पौनर्वसवो युवा अष्टादशवर्षदेशीयः, तस्मिन्नेव राजकुले कुलक्रमागतः, गतः पारमष्टाङ्गस्यायुर्वेदस्य, भूभुजा सुतनिर्विशेषं लालितः, प्रकृत्यैवातिपटीयस्या प्रज्ञया यथावद्विज्ञाता व्याधिस्वरूपाणाम्, रसायनो नाम वैद्यकुमारकः सास्रस्तूष्णीमधोमुखोऽभूत् । पृष्टश्च राजसूनुना "देव, श्वः प्रभाते यथावस्थितमावेदयितास्मि" इत्यब्रवीत् ॥

गतेषु च भिषक्षु, क्षतधृतिः क्षपामुखे क्षितिपालसमीपमेव पुनरारुरोह । तत्र च—"दाहो महान् । आहर हारान् हरिणि । हिमलवैर्लिम्प ललाटं लीलावति । कपोले कलय कुवलयं कलावति । समुपनय मृणालानि मालति । का वेला विलासवति, नैति निद्रा" इत्येवंप्रायान् पितुरालापाननवरतमाकर्णयन्, दूयमानहृदयो दुःखदीर्घां जाग्रदेव निशामनैषीत् ॥

उषसि चावतीर्य चरणाभ्यामेव स्वमन्दिरमाजगाम । तत्र च त्वरमाणो भ्रातुरागमनार्थम् उपर्युपरि क्षिप्रपातिनो

---

स्वां प्रकृतिम् आपन्नः मान्द्यरहितः, पृथिव्यादिपञ्चभूतलीनदेहश्च । "प्रकृतिर्मरणं शरीरिणाम्" इति रघुः । स्वस्थः व्याधिरहितः, स्वर्गस्थश्च । स्वः स्वर्गे तिष्ठतीति स्वस्थः । 'खर्परे शरि' इति विसर्गलोपः । श्रोष्यसि—न तु द्रक्ष्यसि । पुनर्वसोः अपत्यं पुनर्वसुमुनिना प्रोक्तमायुर्वेदमधीते वा पौनर्वसवः । अष्टौ शल्य शालाक्य कायचिकित्सा भूतविद्या कौमारभृत्य अगद रसायनतन्त्र वजीकरणतन्त्ररूपाणि अङ्गानि यस्य सः अष्टाङ्गः ॥

दीर्घाध्वगान्प्रजविनश्चोष्ट्रपालकान् प्राहिणोत् । प्रक्षालितवदनश्च परिजनोपनीतमपि प्रतिकर्म नाग्रहीत् । अग्रतः स्थितानां राजपुत्रयूनां विमनसाम् "रसायनो रसायनः" इति जल्पितमव्यक्तमश्रौषीत् । "भद्राः किं रसायनः" इति पृष्टाश्च ते सर्वे सममेव तूष्णींबभूवुः । भूयो भूयश्चानुबध्यमानाः, "देव, पावकं प्रविष्टः" इति दुःखेन कथं कथमप्याचचक्षिरे ॥

तच्च श्रुत्वा प्लुष्ट इवान्तस्तापेन सद्यो विवर्णतामगात् आसीच्चास्य चेतसि—"कामं स्वयं न भवति, न तु श्रावयत्यप्रियं वचनमरतिकरमितर इवाभिजातो जनः । समुचितमेवेदमथवा स्नेहस्य । किमस्य तातो न तातः, किं वाम्बा न जननी, वयं वा न भ्रातरः ? अन्यस्मिन्नपि तावत्स्वामिनि दुर्लभीभवति भवन्त्यसवो ध्रियमाणा ह्रीहेतवो लोके ; किमुत अमृतमयेऽनुजीविनां निर्व्याजबान्धवे अवन्ध्यप्रसादे सुगृहीतनाम्नि ताते । संप्रति सांप्रतमाचरितमनेनात्मानं दहता । पतितः स केवलं दहने । दग्धास्तु वयम् । धन्यः खल्वसावग्रणीः पुण्यभाजाम् । अपुण्यभाक् तु इदमेव राजकुलम्; कुलपुत्रेण यत्तादृशा वियुक्तम् । अपि च, ममापि कः खल्वेतेषां प्राणानां कार्यातिभारः कृत्यशेषो वा, येन नाद्यापि निष्ठुराः प्रतिष्ठन्ते । को वान्तरायो हृदयस्य, येन न सहस्रधा दलति" इति । दुःखार्तश्च न जगाम राजसद्म । समुत्ससर्ज च सर्वकार्याणि । शयनीये निपत्य उत्तरीयवाससा सोत्तमाङ्गमात्मानमवगुण्ठ्य अतिष्ठत् ॥

इत्थंभूते च देवे हर्षे, राजनि च तदवस्थे सर्वस्य लोकस्य

कपोलेषु कीलिता इव कराः, नासाग्रेषु ग्रथिता इव दृष्टयः, कर्णेषु उत्कीर्णा इव रुदितध्वनयः, लपनेषु पल्लवितानीव श्वसितानि, हृदयेषु निधानीकृतानीव दुःखान्यभवन् । कथास्वपि नाश्रूयन्त परिहासाः । स्वप्नेऽपि नागृह्यन्त प्रसाधनानि । वार्तापि नालभ्यतोपभोगानाम् । नामापि नाकीर्त्यत आहारस्य । दिवापि नामुच्यन्त शयनानि ॥

शनैः शनैश्च महापुरुषविनिपातपिशुनाः समं समन्तात्समुद्भवन्भुवने भूयांसो भूपतेरभावाय भयमुत्पादयन्तो भूतानां महोत्पाताः । तथा हि—दोलायमानसकलकुलाचलचक्रवाला पत्या सार्धं गन्तुकामेव प्रथममचलद्धरित्री । परस्परास्फालनवाचालवीचयो विजुघूर्णिरे अर्णवाः । उपसिंहासनम् आकुलं बभ्राम भ्रामरं पटलम् । अटतामन्तःपुरस्योपरि क्षणमपि न शशाम व्यावक्रोशी वायसानाम् । हर्षोऽपि महोत्पातदूयमानः कथमपि निनाय निशाम् ॥

अन्यस्मिन्नहनि, समीपमस्य राजभवनात्, द्रुतगतिवशविशीर्यमाणालंकारझांकारिणी, वेत्रलतामुत्सृजन्ती, मुखमरुत्तरङ्गितामुत्तरीयांशुकपटीमाकर्षन्ती, शोकोचितेन धम्मिल्लरचनारहितेन शिरोरुहसंचयेन चञ्चता प्रावृतकुचा, कुचताडनपीडया समुच्छूनाताम्रश्यामलतलं मुहुर्मुहुः करकिसलयं धुनाना, "क कुमारः? क कुमारः?" इति प्रतिपुरुषं पृच्छन्ती वेलेति नाम्ना यशोवत्याः

व्यावक्रोशी परस्पराह्वानम् । कर्मव्यतीहारे णच् । व्याक्रोशी इति पाठान्तरम् । धम्मिल्लरचना केशसंयमनम् ॥

प्रतीहारी आजगाम । विषण्णलोकलोचनप्रत्युद्गता चोपसृत्य कुट्टिमन्यस्तहस्तयुगला विज्ञापितवती—"देव, परित्रायस्व । परित्रायस्व । जीवत्येव भर्तरि किमप्यध्यवसितं देव्या" इति ॥

ततस्तदपरमाकर्ण्य च्युत इव सत्त्वेन, द्रुत इव दुःखेन, आचान्त इव चिन्तया, अप्रतिपत्तिरासीत् । आसीच्चास्य चेतसि—"प्रतिपन्नसंज्ञस्य बहुशोऽपि हृदये दुःखाभिषङ्गो निपतन् अश्मनीव लोहप्रहारः कठिने हुतभुजमुत्थापयति, न तु भस्मसात्करोति मे निरनुक्रोशस्य कायम्" इति । उत्थाय च त्वरमाणोऽन्तःपुरमगात् । तत्र च मर्तुमुद्यतानां राजमहिषीणाम् अशृणोद्दूरादेव "कुरङ्गवति, अयमामन्त्रणाञ्जलिः । सानुमति, अयमन्त्यः प्रणामः । कुवलयवति, एष ते अवसानपरिष्वङ्गः" इत्येवंप्रायानालापान् ॥

दह्यमानश्रवणश्च तैः, प्रविशन्नेव, निर्यान्तीं दत्तसर्वस्वापतेयाम्, गृहीतमरणप्रसाधनाम्, जानकीमिव जातवेदसं पत्युः पुरः प्रवेक्ष्यन्तीम्, प्रत्यग्रस्नानार्द्रदेहतया श्रियमिव भगवतीं सद्यः समुद्रादुत्थिताम्, कुसुम्भबभ्रुणी वाससी दधानाम्, संनिहितप्राणसमं मरणाय चित्तमिव चित्रफलकमविचलं धारयन्तीम्, परिजनेन संतापेन च गृहीतसर्वावयवेन परीताम्, कञ्चुकिभिर्दुःखैश्चातिवृद्धैरनुगताम्, भूपालवल्लभान्कौलेयकानपि सास्रमालो-

कुट्टिमः निबद्धा भूः । सत्त्वं मनोबलम् । अप्रतिपत्तिः इतिकर्तव्यतामूढः । भस्मसात्करोति कृत्स्नं कायं भस्म करोति । "विभाषा साति कार्त्स्न्ये" इति सातिः । अनुक्रोशः दया । पुरः पूर्वभागे, पूर्वकाले च । कुले

कुयन्तीम्, सपत्नीनामपि पादयोः पतन्तीम्, चित्रपुत्रिका अप्यामन्त्रयमाणाम्, पशूनप्यापृच्छमानाम्, भवनपादपानपि परिष्वजमानां मातरं ददर्श ॥

दूरादेव च बाष्पायमाणदृष्टिरभ्यधात्—"अम्ब, त्वमपि मां मन्दपुण्यं परित्यजसि । प्रसीद । निवर्तस्व" इत्यभिदधान एव चरणयोर्न्यपतत् । देवी तु यशोवती तथा तिष्ठति पादनिहित-शिरसि विमनसि कनीयसि प्रेयसि तनये, स्नेहसंभारेण निर्भरा-विर्भूतेनाभिभूयमाना निवारयितुं न शशाक बाष्पोत्पतनम् । गद्गदिकागृह्यमाणगलविकला च निःसामान्यमन्युतरलीक्रियमाणा-धरोद्देशा निमील्य नयने नयनाम्भःसेकप्लवेन प्लावयन्ती विमलौ कपोलौ, संछाद्य अंशुकपटान्तेन किंचिदुत्तानितं वदनेन्दुम्, दूयमानमानसा, स्मरन्ती प्रसवदिवसादारभ्य सकलमङ्कशायिनः शैशवमस्य, ज्ञातिगृहगतहृदया "अम्ब तात, न पश्यतं पापां परलोकप्रस्थितां मामेवमतिदुःखिताम्" इति मुहुर्मुहुराक्रन्दन्ती पितरौ, "हा वत्स, विश्रान्तभागधेयया न दृष्टोऽसि" इति प्रेष्ठं ज्येष्ठं तनयमसंनिहितं क्रोशन्ती, "अनाथा जाता" इति श्वशुरकुलवर्तिनीं दुहितरमनुशोचन्ती, "निष्करुण, किमपराद्धं तवामुना जनेन" इति दैवमुपालभमाना, "नास्ति मत्समा

---

भवाः कौलेयकाः श्वानः । 'कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु' । समानः पतिः यासां ताः सपत्न्यः । आपृच्छमानाम् "आङि नुप्रच्छयोः" इत्यात्मने-पदम् । बाष्पम् उद्वमन्ती बाष्पायमाणा । "बाष्पोष्मभ्यामुद्वमने" इति क्यङ् । युवा कनीयान् कनिष्ठः ॥

सीमन्तिनी दुःखभागिनी" इति निन्दन्ती बहुविधमात्मानम्, मुक्तकण्ठमतिचिरं प्राकृतप्रमदेव प्रारोदीत् ॥

प्रशान्ते च मन्युवेगे सस्नेहमुत्थापयामास सुतम् । हस्तेन चास्य प्ररुदितस्य क्षरन्तीं दृष्टिमुन्ममार्ज । स्वयमपि लोचने प्रमृज्य, पुनः पुनरायततरं निःश्वस्यावादीत्—"वत्स, नासि न प्रियो निर्गुणो वा परित्यागार्हो वा । स्तन्येनैव सह त्वया पीतं मे हृदयम् । अस्मिंश्च समये प्रभूतप्रभुप्रसादान्तरिता त्वां न पश्यति दृष्टिः । कुलकलत्रमस्मि चारित्रधना धर्मधवले कुले जाता । किं विस्मृतोऽसि मां समरशतशौण्डस्य पुरुषप्रकाण्डस्य केसरिण इव केसरिणीं गृहिणीम् । वीरजा वीरजाया वीरजननी च मादृशी पराक्रमक्रीता कथमन्यथा कुर्यात्? मर्तुमविधवैव वाञ्छामि । न च शक्नोमि दग्धस्य भर्तुरार्यपुत्ररहिता रतिरिव निरर्थकान्प्रलापान्कर्तुम् । प्रत्यग्रदृष्टदारुणदुःखदग्धायाश्च मे किं धक्ष्यति धूमध्वजः । मरणाच्च मे जीवितमेवास्मिन्समये साहसम् । अतिशीतलः पतिशोकानलादक्षयस्नेहेन्धनादस्मादनलः । कैलासकल्पे प्रवसति जीवितेश्वरे जरत्तृणकणिकालघीयसि जीविते लोभ इति क्व घटते । अपि च, जीवन्तीमपि मां नरपतिमरणावधीरणमहापातकिनीं न स्प्रक्ष्यन्ति, पुत्र, पुत्रराज्यसुखानि । दुःखदग्धानां च भूतिरमङ्गला चाप्रशस्ता च निरुपयोगा च भवति । वत्स, विश्वस्तानां यशसा स्थातुमिच्छामि लोके, न वपुषा । तदहमेव त्वां तावत्तात, प्रसादयामि, न पुनर्मनोरथप्रातिकूल्येन कदर्थनीयास्मि" इत्युक्त्वा पादयोरपतत् ॥

स तु ससंभ्रममपनीय चरणयुगलम्, अवनमिततनुः उदनमयन्मातरम् । दुर्निवारतां च शुचः समवधार्य, कुलयोषिदुचितां च तामेव श्रेयसीं मन्यमानः क्रियाम्, कृतनिश्चयां च तां ज्ञात्वा तूष्णीमधोमुखोऽभवत् । अभिनन्दति हि स्नेहकातरापि कुलीनता देशकालानुरूपम् ॥

देव्यपि यशोवती परिष्वज्य समाघ्राय च शिरसि, निर्गत्य, चरणाभ्यामेव चान्तःपुरात्सरस्वतीतीरं ययौ । तत्र च स्त्रीस्वभावकातरैर्दृष्टिपातैः प्रविकसितरक्तपङ्कजपुञ्जैरिवार्चयित्वा भगवन्तं भानुमन्तामिव मूर्तिरैन्दवी चित्रभानुं प्राविशत् । इतरोऽपि मातृमरणविह्वलो बन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात् । अपश्यच्च स्वल्पावशेषप्राणवृत्तिं जनयितारम् । आश्लिष्य चास्य पादपद्मौ, अश्रुस्रोतसां संतानं वर्षन्निरतरवद्भिमुक्ताराबश्चिरं रुरोद ॥

राजा तु तम् उपरुध्यमानदृष्टिः अविरतरुदितशब्दाश्रितश्रवणः प्रत्यभिज्ञाय शनैः शनैरवादीत्—"पुत्र, नार्हस्येवं भवितुम् । भवद्विधा न ह्यमहासत्त्वाः । सत्त्ववतां चाग्रणीः सर्वातिशयाश्रितः क्व भवान्, क्व च वैक्लव्यम् । कुलप्रदीपोऽसि इति, दिवसकरसदृशतेजसस्ते लघूकरणमिव । गृह्यतां श्रीरिति, स्वयमेव श्रिया गृहीतस्य विपरीतमिव । उह्यतां राज्यभार इति, भुवनत्रयभारोचितस्यानुचितनियोग इव । निगृह्यतां चापलमिति, नूतनतरवयसि निगृहीतेन्द्रियस्य निरवकाशेव मे वाणी । निरवशेषतां शत्रवो नेया इति, सहजस्य तेजस एवेयं चिन्ता" इत्येवं वदन्नेव अपुनरुन्मीलनाय निमिमील राजसिंहो लोचने ॥

अस्मिन्नेवान्तरे पूषाप्यायुषेव तेजसा व्ययुज्यत। क्रमेण च प्रवृत्तायां संध्यायाम्, नाकपथप्रस्थितपार्थिवप्रत्युद्गतपुरुहूतातपत्र इव पूर्वस्यां दिशि दृश्यमाने चन्द्रमसि, नरेन्द्रः स्वयं समर्पितस्कन्धैर्गृहीत्वा शवशिबिकां सामन्तैः पौरैश्च पुरोहितपुरःसरैः सरितं सरस्वतीं नीत्वा नरपतिसमुचितायां चितायां हुताशसंस्क्रियया यशःशेषतामनीयत ॥

देवोऽपि हर्षः पुञ्जीभूतेन सकलेनेव जीवलोकेन लोकेन राजकुलसंबद्धेनाशेषेण शोकमूकेन परिवृतः, निर्व्यवधानायां धरण्यामुपविष्ट एव तां निशीथिनीं भीमरथीभीमामखिलां सराजको जजागार ॥

अजनि चास्य चेतसि—"ताते दूरीभूते संप्रत्येतावान्खलु जीवलोकः। लोकस्य भग्नाः पन्थानो मनोरथानाम्। खिलीभूतानि भूतिस्थानानि। स्थगितान्यानन्दस्य द्वाराणि। सुप्ता सत्यवादिता। लुप्ता लोकयात्रा। विलीना बाहुशालिता। प्रलीना प्रियालापिता। समाप्ता समरशौण्डता। ध्वस्ता परगुणप्रीतिः। विश्रान्ता विश्वासभूमयः। अपदान्यपदानानि। निरुपयोगाणि शास्त्राणि। कथावशेषा विशेषज्ञता। ददातु जनो जलाञ्जलिम् और्जित्याय। प्रतिपद्यतां प्रव्रज्यां प्रजापालता। बध्नातु वैधव्यवेणीं वरमनुष्यता। समाश्रयतु राजश्रीराश्रमपदम्। परिधत्तां धवले वाससी वसुमती। तपस्यतु तपोवनेषु तेजस्विता। क गम्यतां पुनस्तस्य कृते कृतज्ञतया। क पुनः प्राप्स्यति तादृशान्

---

अपदानं शुद्धचरितम् पूर्ववृत्तं वा। और्जित्य स्थैर्यम्। तपस्यतु तपः करोतु ॥

महापुरुषनिर्माणपरमाणून्परमेष्ठी । शून्याः संवृत्ता दश दिशो गुणानाम् । जगज्जातमन्धकारं धर्मस्य । निष्फलमधुना जन्म शस्त्रोपजीविनाम् । अपि नाम स्वप्नेऽपि दृश्येत दीर्घरक्तनयनं पुनस्तन्मुखसरोजम्? जन्मान्तरेऽपि पुनः परिष्वज्येत तद्भुज-युगलम्? लोकान्तरेऽपि 'पुत्र' इत्यालपतः श्रूयेत सा सुधारस-मुद्गिरन्ती भारती?" इत्येतानि चान्यानि च चिन्तयत एवास्य कथमपि सा क्षयमियाय यामिनी ॥

ततः शुचेव मुक्तकण्ठमारटत्सु कृकवाकुकुलेषु, तनूभूते तमसि पतितयूथप इव वनगजयूथे कक्ष्यान्तरवर्तिनि पितृपरि-जने, विषादिनि उपरिरुदन्निषादिनि च स्तम्भनिषण्णे निस्पन्दमन्दे राजकुञ्जरे, मन्दुरापालकाक्रन्दकथिते वाजिरभाजि राजवाजिनि, विश्रान्तजयशब्दकलकले च शून्ये महास्थानमण्डपे, दह्यमान-दृष्टिर्निर्जगाम राजकुलात् । अगाच्च सरस्वतीतीरम् । तस्यां स्नात्वा पित्रे ददावुदकम् । अपस्नातश्च अनिष्पीडितमौलिरेव परिधाय उद्गमनीयदुकूलवाससी निःश्वासपरो निरातपत्रो निरुत्सारणः, चरणाभ्यामेव भवनमाजगाम ॥

राजवल्लभास्तु भृत्याः सुहृदः सचिवाश्च तस्मिन्नेवाहनि निर्गत्य प्रियं पुत्रदारमुत्सृज्य उद्बाष्पैर्बन्धुभिर्वार्यमाणा अपि बहु-नृपगुणगणहृतहृदयाः केचिद्वैश्वानरं विविशुः, केचिदटवीभुवः शून्या जगृहुः, केचिन्मुनयो बभूवुः ॥

---

अपस्नातः मृतस्नातः । उद्गमनीयं धौतवस्त्रयुगमम् ॥

देवमपि हर्षं पितृशोकविह्वलीकृतम्, श्रियं शाप इति, महीं महापातकमिति, राज्यं रोग इति, भोगान् भुजंगा इति, निलयं निरय इति, बन्धुं बन्धनमिति, जीवितम् अयश इति, देहं द्रोह इति, कल्यतां कलङ्क इति, आयुः अपुण्यफलमिति, आहारं विषमिति, विषम् अमृतमिति, हृदयस्फुटनम् अभ्युदय इति च मन्यमानम्, सर्वासु क्रियासु विमुखम्, ग्राह्यगिरो गुरवः, श्रुतिस्मृतीतिहासविशारदाश्च जरद्द्विजातयः, यथावदधिगतात्मतत्त्वाश्च मस्करिणः, समदुःखसुखाश्च मुनयः, संसारासारत्वकथनकुशला ब्रह्मवादिनः, शोकापनयननिपुणाश्च पौराणिकाः पर्यवारयन् ॥

अनुनीयमानश्च तैः कथं कथमप्याहारादिकासु क्रियास्वाभिमुख्यमभजत। भ्रातृगतहृदयश्चाचिन्तयत्—"अपि नाम तातस्य मरणमुपश्रुत्य आर्यो बाष्पजलस्नातो न गृह्णीयाद्वल्कले? नाश्रयेद्वा राजर्षिराश्रमपदम्? न विशेद्वा पुरुषसिंहो गिरिगुहाम्? अनित्यतया जनितवैराग्यो वा न निराकुर्यादुपसर्पन्तीं राज्यलक्ष्मीम्? इहागतो वा राजभिरभिधीयमानो न पराचीनतामाचरेत्? अतिपितृपक्षपाती खल्वार्यः" इत्येतानि चान्यानि च चिन्तयन्, दर्शनोत्सुकहृदयो भ्रातुरागमनम् उदीक्षमाणः कथं कथमप्यतिष्ठत् ॥

इति भट्टबाणविरचिते हर्षचरिते महाराजमरणवर्णनं
नाम पञ्चम उच्छ्वासः।

---

## ॥ षष्ठ उच्छ्वासः ॥

अथ प्रथमप्रेतपिण्डभुजि भुक्ते द्विजन्मनि, गतेष्वाशौचदिवसेषु, दीयमाने द्विजेभ्यो नृपोपकरणकलापे, नीतेषु तीर्थस्थानानि कीकसेषु, क्रमेण च मन्देष्वाक्रन्देषु, विश्राम्यत्स्वश्रुणि, कृतेषु कविरुदितकेषु, देवो हर्षः कदाचिदुत्सृष्टसकलव्यापारः, पुञ्जीभूतवृद्धबन्धुवर्गाग्रेसरेण अवनतमूकमुखेन महाजनेन मौलेनाकाले आत्मानं वेष्ट्यमानमद्राक्षीत्। दृष्ट्वा चाकरोन्मनसि—"किमन्यत्? आर्यमागतमावेदयत्ययं शोकपराभूतो लोकाकरः" इति। वेपमानहृदयश्च पप्रच्छ प्रविशन्तमन्यतमं पुरुषम्—"अङ्ग, कथय, किमार्यः प्राप्तः" इति। स मन्दमब्रवीत्—"देव, यथादिशसि, द्वारि" इति॥

अनन्तरं च द्वारपालमुक्तेन प्रथमप्रविष्टेन परिजनेनेवाक्रन्देन कथ्यमानम्, प्रथीयसा वाष्पपयःप्रवाहेण महीमनवरतं सिञ्चन्तम्, क्रीतमिव क्रशिम्ना, मूकीकृतमिव मौनेन, पिष्टमिव पीडया, विधृतमिव वैराग्येण, अवज्ञातमिव प्रज्ञया, अबाध्येन वृद्धबुद्धीनाम् असाध्येन साधुभाषितानाम् अगम्येन गुरुगिराम्

---

भुक्ते भुक्तवति, बाहुलकात् कर्तरि क्तः। आशौचम् अशुचेर्भावः। कीकसानि अस्थीनि। अग्रे सरतीति अग्रेसरः। "पुरोऽग्रतोऽग्रेषु सर्तेः" इति टः। मूलात् आगतो मौलः, परंपरागत इत्यर्थः। आकरः समूहः। अङ्ग भोः। पृथुः प्रथीयान् प्रथिष्ठः। कृशस्य भावः क्रशिमा॥

अपथेन प्रज्ञाप्रयत्नानाम् अगोचरेण सुहृदनुरोधानाम् अभूमिभूतेन कालक्रमापचयानां शोकेन कवलीकृतं ज्येष्ठं भ्रातरमपश्यत् ॥

अथ दूरादेव दृष्ट्वा देवो राज्यवर्धनः चिरकालकलितं बाष्पवेगं मुमुक्षुः, सुदूरप्रसारितेन दोर्दण्डद्वयेन गृहीत्वा कण्ठे भ्रातरम्, मुक्तकण्ठं रुरोद। सुचिराच्च कथं कथमपि निर्वृष्ट-नयनजलः पर्जन्य इव शरदि स्वयमेवोपशशाम। तूष्णीमेव च चिरं स्थित्वा उत्थाय स्नानभूमिमगात्। तस्यां च स्थित्वा मौलिमनादरान्निष्पीड्य चतुःशालवितर्दिकायां पर्यङ्किकायां निपत्य जोषमस्थात्। देवोऽपि हर्षस्तथैव स्नात्वा अदूर एवास्य तूष्णी-मेव समवातिष्ठत। दृष्ट्वा दृष्ट्वा दूयमानमानसमग्रजन्मानं समस्फुटदिवास्य सहस्रधा हृदयम् ॥

औरसदर्शनं हि यौवनं शोकस्य। लोकस्य तु नरपतिमरण-दिवसादपि दारुणः स बभूव दिवसः। सर्वस्मिन्नेव नगरे न केनचिदस्नायि, न केनचिदपाचि, न केनचिदभोजि; सर्वत्र सर्वे-णारोदि। केवलमनेन क्रमेणातिचक्राम दिवसः ॥

स चापरपारावारपयसि ममज्ज माञ्जिष्ठारुणोऽरुणसारथिः। अकाशत चाकाशे शशाङ्कमण्डलम्। अस्यां च वेलायामनतिक्रम-णीयवचनैरुपसृत्य प्रधानसामन्तैर्विज्ञाप्यमानः कथं कथमप्यभुक्त ॥

प्रभातायां च शर्वर्याम्, सर्वेषु प्रविष्टेषु राजसु, समीपस्थितं हर्षदेवमुवाच—"तात, भूमिरसि गुरुनियोगानाम्। शैशव एवाग्राहि भवता तातस्य चित्तवृत्तिः। भवन्तमेवंविधं विधेयं

अपचयः ह्रासः ॥

विधिविधानोपनतनैर्घृण्यमिदं किमपि बिभणिषति मे हृदयम् । नालम्बनीया बालभावसुलभा वामता । वैधेय इव मा कृथाः प्रत्यूहमीहितेऽस्मिन् । न खलु न जानासि लोकवृत्तम् । लोकत्रयत्रातरि मांधातरि मृते किं कृतं पुरुकुत्सेन, भ्रूलतादिष्टाष्टादशद्वीपे दिलीपे वा रघुणा, महासुरसमरमध्याध्यासितत्रिदशरथे दशरथे वा रामेण, गोष्पदीकृतचतुरुदन्वदन्ते दुष्यन्ते वा भरतेन। यं च किल शोकः समभिभवति, तं कापुरुषमाचक्षते शास्त्रविदः। स्त्रियो हि विषयः शुचाम् । तथापि किं करोमि स्वभावस्य। सेयं कापुरुषता वा स्त्रैणं वा, यदेवमास्पदं पितृशोकहुतभुजो जातोऽस्मि । मम हि प्रनष्टः प्रज्ञालोकः, प्रज्वलितं हृदयम्, नोपसर्पति विवेकः, मुह्यति मतिः । न शक्नोति मे हृदयं तादृशस्य सुमेरुकल्पस्य महापुरुषस्य विनिपातमश्रुभिरेव केवलैरतिवाहयितुम् । सोऽहमिच्छामि मनसि वाससीव सुलभं स्नेहमलमिदम् अमलैः शिखरिशिखरप्रस्रवणस्वच्छस्रोतोम्बुभिः क्षालयितुमाश्रमपदे । अतस्त्वमनभिमतामपि जरामिव पूरुराज्ञया गुरोर्गृहाण मे राज्यचिन्ताम् । त्यक्तसकलबालक्रीडेन हरिणेव दीयतामुरो लक्ष्म्यै । परित्यक्तं मया शस्त्रम्" इत्येवमभिधाय, खड्गग्राहिणो हस्तादादाय निजं निस्त्रिंशम् उत्ससर्ज धरण्याम् ॥

अथ तच्छ्रुत्वा निशितशिखेन शूलेनेवाहतः प्रविदीर्ण-

कुत्सितः पुरुषः कापुरुषः । "विभाषा पुरुषे" इति कादेशः । स्त्रियो भावः कर्म वा स्त्रैणम् । स्नेहः प्रेम, तैलं च । त्रिंशतः अङ्गुलिभ्यः निर्गतः निस्त्रिंशः खड्गः ॥

हृदयो देवो हर्षः समचिन्तयत्—"किं नु खलु मामन्तरेणार्ये केनचिदसहिष्णुना किंचिद्ग्राहितः कुपितः स्यात् ? उतानया दिशा परीक्षितुकामो माम् ? उत शोकजन्मा चेतसः समाक्षेपोऽयमस्य ? आहोस्वित् आर्य एवायं न भवति ? किं वार्येणान्यदेवाभिहितम्, अन्यदेवाश्रावि मया शोकशून्येन श्रवणेन्द्रियेण ? आर्यस्य वान्यदेव विवक्षितम्, अन्यदेवापतितं मुखात् ? अथवा सकलवंशविनाशाय निपातनोपायोऽयं विधेः ? मम वा निखिलपुण्यपरिक्षयोपक्षेपः कर्मणाम् ? येनायं यः कश्चिदिव यत्किंचनकारिणं मामपुष्पभूतिवंशसंभूतमिव अताततनयमिव अनात्मानुजमिव अभक्तमिव दृष्टदोषमिव, श्रोत्रियमिव सुरापाने, सद्भृत्यमिव स्वामिद्रोहे, सज्जनमिव नीचोपसर्पणे, अतिदुष्करे कर्मणि समादिष्टवान् । तदेतत्तावदनुरूपम्, यत्तादृशि पितरि मृते तपोवनं वा गम्यते, वल्कलानि वा गृह्यन्ते, तपांसि वा सेव्यन्ते । या तु मयि राज्याज्ञा, सा दग्धेऽपि दाहकारिणी मध्यमग्रहग्लपिते धन्वनीवाङ्गारवृष्टिः । तदसदृशमिदमार्यस्य । यद्यपि च विभुरनभिमानः, द्विजातिरनेषणः, मुनिररोषणः, कपिरचपलः, कविरमत्सरः, साधुरदरिद्रः, अमात्यः सत्यवादी, राजसूनुरदुर्विनीतश्च जगति दुर्लभः ; तथापि ममार्य एवाचार्यः । को हि नाम तद्विधे निपतिते जनयितरि, ईदृशे च त्यक्तराज्ये भ्रातरि ज्यायसि तपोवनं गच्छति, मृद्गोलकं वसुधाभिधानं चण्डालोऽपि काम-

---

अन्तरेण उद्दिश्य । "श्रोत्रियन् छन्दोऽधीते" । अवग्रहः वर्षाभावः । धन्वा मरुप्रदेशः । एषणा अभिलाषः ॥

येत ? कथमिव संभावितमत्यन्तमनुचितमिदमार्येण ? किं वास्य चेतसश्च्युतः सौमित्रिः, विस्मृता वा वृकोदरप्रभृतयः । किं वा ममानेन वृथा बहुधा विकल्पितेन । तूष्णीमेवार्यमनुगमिष्यामि । गुरुवचनातिक्रमकृतं च किल्बिषमेतत्तपोवने तप एवापास्यति" इत्यवधार्य, मनसा प्रथमतरं गतस्तपोवनमधोमुखस्तूष्णीमवातिष्ठत ॥

अत्रान्तरे पूर्वादिष्टेनैव रुदता वस्त्रकर्मान्तिकेन समुपस्थापितेषु वल्कलेषु, रटति राजस्त्रैणे, तारमब्रह्मण्यम् ऊर्ध्वदोष्णि विरुवति विप्रजने, पादप्रणतिपरे फूत्कुर्वति पौरवृन्दे, निराशेषु निःश्वसत्सु सामन्तेषु, सबालवृद्धासु तपोवनाय प्रस्थितासु सर्वासु प्रजासु, सहसैव प्रविश्य शोकविक्लबः प्रक्षरितनयनसलिलो राज्यश्रियः परिचारकः संवादको विमुक्ताक्रन्दः सदस्यात्मानमपातयत् ॥

अथ संभ्रान्तो राज्यवर्धनस्तं पर्यपृच्छत्—"भद्र, भण भण किमपरमधिकतरमितः समुपनयति विधिः" इति । स कथं कथमप्यकथयत्—"देव, पिशाचानामिव नीचात्मनां चरितानि छिद्रप्रहारीणि प्रायशो भवन्ति । यस्मिन्नहन्यवनिपतिरुपरत इत्यभूद्वार्ता, तस्मिन्नेव देवो ग्रहवर्मा दुरात्मना मालवराजेन जीवलोकमात्मनः सुकृतेन सह त्याजितः । भर्तृदारिकापि राज्यश्रीः

---

वृकोदरः भीमसेनः । कर्मणः अन्तः अस्मिन् अस्तीति कर्मान्तिकः भृत्यः । ब्रह्मणि साधु ब्रह्मण्यम्, न ब्रह्मण्यम् अब्रह्मण्यम् । "अब्रह्मण्यमवध्योक्तौ" इत्यमरः ॥

कालायसनिगडयुगलचुम्बितचरणा चौराङ्गनेव संयता कान्यकुब्ज
कारायां निक्षिप्ता । किंवदन्ती च, यथा किल—अनायकं साध
मत्वा जिघृक्षुः स दुर्मतिरेतामपि भूमिमाजिगमिषति इति
विज्ञापिते प्रभुः प्रभवति" इति ॥

ततश्च तादृशमनुपेक्षणीयमसंभावितमाकस्मिकमपरं व्यसि
करमाकर्ण्य, अश्रुतपूर्वत्वात्परिभवस्य, परपरिभवासहिष्णुतया
स्वभावस्य, दर्पबहुलतया च नवयौवनस्य, कृपाभूमिभूतायाः
स्वसुः स्नेहात्, स तादृशोऽपि बद्धमूलोऽपि अत्यन्तगुरुरेकप
एवास्य ननाश शोकावेगः । विवेश च हृदयं भयंकरः कोपावेगः
अनुजमवादीच्च—"आयुष्मन्, इदं राजकुलम्, अमी बान्धवा
परिजनोऽयम्, इयं भूमिः, एताः प्रजाः । गतोऽहमद्यैव मालव
कुलप्रलयाय । इदमेव तावद्वल्कलग्रहणम्, इदमेव तपः, शोकाप
गमोपायश्चायमेव, यत् अत्यन्ताविनीतारिनिग्रहः । सोऽयं कुर
ङ्गकैः कचग्रहः केसरिणः, भेकैः करपातः कालसर्पस्य, तिमिरै
स्तिरस्कारो रवेः, यो मालवैः परिभवः पुष्पभूतिवंशस्य । अन्त
रितस्तापो मे महीयसा मन्युना । तिष्ठन्तु सर्व एव राजानः करि
णश्च त्वयैव सार्धम् । अयमेको भण्डिरयुतमात्रेण तुरङ्गमाणामनु
यातु माम्" इत्यभिधाय चानन्तरमेव प्रयाणपटहमादिदेश ॥

तं च तथा समादिशन्तमाकर्ण्य, निवर्तनादेशेन दूरप्ररूढ
प्रणयपीडः प्रोवाच देवो हर्षः—"कमिव दोषं पश्यति आर्य
ममानुगमने? यदि बाल इति, नितरां तर्हि न त्याज्योऽस्मि
रक्षणीय इति, भवद्भुजपञ्जरं रक्षास्थानम् । अशक्त इति, ह

परीक्षितोऽस्मि । अक्लेशसह इति, स्त्रीपक्षे निक्षिप्तोऽस्मि । सुख-मनुभवत्विति, त्वयैव सह तत्प्रयाति । अलघुपरिकरः प्रयामीति, पादरजसि कोऽतिभारः । द्वयोर्गमनमसांप्रतमिति, मामनु-गृहाण गमनाज्ञया । कातरो भ्रातृस्नेह इति, सदृशो दोषः । अवञ्चितपूर्वोऽस्मि प्रसादेषु । तत्प्रसीदत्वार्यः, नयतु मामपि" इत्यभिधाय पादयोरपतत् ॥

तमुत्थाप्य पुनरग्रजो जगाद—"तात, किमेवमतिमहा-रम्भपरिग्रहेण गरिमाणमारोप्यते बलादतिलघीयानप्यहितः । हरिणार्थमतिक्षेपणः सिंहसंभारः । तृणानामुपरि कति कवचयन्ति आशुशुक्षणयः । अपि च, तवाष्टादशद्वीपा मेदिन्यस्त्येव विक्र-मस्य विषयः । न हि कुलशैलनिवहवाहिनो वायवः संनह्यन्त्य-तितरले तूलराशौ । तिष्ठतु भवान्" इत्यभिधाय तस्मिन्नेव वासरे निर्जगाम अभ्यमित्रम् ॥

अथ तथागते भ्रातरि, उपरते च पितरि, प्रोषितजीविते च जामातरि, मृतायां च मातरि, संयतायां च स्वसरि, स्वयूथ-भ्रष्ट इव वन्यः करी देवो हर्षः कथं कथमप्येकाकी कालं तमनैषीत् ॥

अतिक्रान्तेषु च बहुषु वासरेषु, कदाचित्, आस्थानगतः सहसैव प्रविशन्तम्, अनुप्रविशता विषण्णवदनेन लोकेनानु-गम्यमानम्, नासावंशस्याग्रे ग्रथितदृष्टिं कुन्तलं नाम बृहदश्ववारं राज्यवर्धनस्य प्रसादभूमिं ददर्श । तस्माच्च हेलानिर्जितमालवानी-

कमपि गौडाधिपेन मिथ्योपचारोपाचितविश्वासं मुक्तशस्त्रमेका किनं विस्रब्धं स्वभवन एव भ्रातरं व्यापादितमश्रौषीत् ॥

श्रुत्वा च महातेजस्वी सहसैव प्रजज्वाल । ततश्च ह इव कृतभैरवाकारः, हरिरिव प्रकटितनरसिंहरूपः, महाशीवि इव दुर्नरेन्द्राभिभवरोषितः, तारुण्यावतार इव तेजसः, सर्वो द्योग इव दर्पस्य, राज्याभिषेक इव रणरसस्य, परां भीषण तामयासीत् ॥

अवादीच्च—"गौडाधिपमपहाय कस्तादृशं महापुरुषं मुक्त शस्त्रं कलशयोनिमिव कृष्णवर्त्मप्रसूतिरीदृशेन सर्वलोकविगर्हितेन मृत्युना शमयेदार्यम् । कां नु गतिं गमिष्यति? कस्मिन्वा नरके निपतिष्यति? श्वपाकोऽपि क इदमाचरेत्? नामापि गृह्णतोऽस्य पापकारिणः पापमलेन लिप्यत इव मे जिह्वा । केदानीं यास्यति दुर्बुद्धिः" इति ॥

एतदभिदधत एवास्य पितुरपि मित्रं सेनापतिः, समग्र विग्रहप्राग्रहरः, हरितालशैलावदातदेहः, प्रांशुः, गतभूयिष्ठे वयसि वर्तमानः बहुशरशयनसुप्तोत्थितोऽपि हसन्निव शान्तनवमतिदीर्घे णायुषा, स्थैर्यकार्कश्योन्नतिभिरचलानपि ह्रेपयन्निव, सहजप्रचण्ड तेजःप्रसरपरिस्फुरणेन सवितारमपि तृणीकुर्वन्निव, अरणिरमर्षाग्नेः,

---

भैरवः भयंकरः, शिवावतारभेदश्च । नरसिंहः नरश्रेष्ठः, अवतारभेदश्च नरेन्द्रः राजा, विषवैद्यश्च । कलशयोनिः द्रोणाचार्यः । कृष्णवर्त्मा अग्निः स प्रसूतिः उत्पत्तिस्थानं यस्य सः धृष्टद्युम्नः । कृष्णं श्यामं दुष्टं वर्त्म मार्गः तस्य प्रसूतिश्च । शान्तनवं भीष्माचार्यमपि ॥

ऐश्वर्यं शौर्यस्य, जीवितं जिगीषुतायाः, कुलगुरुर्वीरगोष्ठीनाम्, तुला शौर्यशालिनाम्, सीमान्तदृश्वा शस्त्रग्रामस्य, पारगः प्रतिज्ञायाः, मर्मज्ञो महाविग्रहाणाम्, संनिधावेव समुपविष्टः सिंहनादनामा स्वरेणैव दुन्दुभिघोषगम्भीरेण सुभटानां समररसमानयन्निवज्ञापितवान्—“देव, न कश्चित्कृताश्रयया मलिनया मलिनतराः कोकिलया काका इव कापुरुषा हतलक्ष्म्या विप्रलभ्यमानमात्मानं न चेतयन्ते । छत्रच्छायान्तरितरवयो विस्मरन्त्यन्यं तेजस्विनं जडधियः । किं वा करोतु वराकः, येनातिभीरुतया नित्यपराङ्मुखेण न दृष्टान्येव कुपितानां तेजस्विनां मुखानि । नासौ तपस्वी जानात्येवम्, यथा— अभिचारा इव विप्रकृताः सद्यः सकलकुलप्रलयमुपहरन्ति मनस्विनः । जलेऽपि ज्वलन्ति ताडितास्तेजस्विनः । सकलवीरगोष्ठीबाह्यस्य तस्यैवेदमुचितमनुत्तारनिरयनिपातनिपुणं कर्म । मनस्विनां हि प्रधनप्रधानधने धनुषि ध्रियमाणे, सति च कृपाणे, कृपणोपायाः पयोधिमथनप्रभृतयोऽपि श्रीसमुत्थानस्य, किंपुनरीदृशाः । यश्चाहितहतस्वजनो मनस्विजनो द्विषद्योषिदुरस्ताडनेन कथयति हृदयदुःखम्, परुषासिलतानिपातपवनेन उच्छ्वसिति, निरुच्छ्वसितशत्रुशरीराश्रुधारापातेन रोदिति, विपक्षवनिताचक्षुषा ददाति जलम्, स श्रेयान् नेतरः । न च स्वप्नदृष्टनष्टेष्विव क्षणिकेषु शरीरेषु निबध्नन्ति बन्धुबुद्धिं प्रबुद्धाः । स्थायिनि यशसि शरीरधीर्वीराणाम् । मणिप्रदीपमिव कज्जलमलो

---

अभिचाराः हिंसाकर्माणि । विप्रकृताः पीडिताः, विप्रैः कृताश्च । ताडिताः प्रहृताः, तडित्संबन्धिनश्च । जले सलिले जडे च ॥

न स्पृशत्येव तेजस्विनं शोकः। स त्वं सत्त्ववतामग्रणीः, प्राग्रहरः प्राज्ञानाम्, प्रथमः समर्थानाम्, प्रष्ठोऽभिजातानाम्, अग्रेसरस्तेजस्विनाम्, आदिरसहिष्णूनाम्। एताश्च धीरताया निवासशिशिरभूमयः स्वायत्ताः सुभटानामुरःकवाटभित्तयः। ततः किं गौडाधिपेनैकेन। तथा कुरु, यथा नान्योऽपि कश्चिदेवमाचरति भूयः। येनैव ते गतः पिता पितामहः प्रपितामहो वा, तमेव मा हासीस्त्रिभुवनस्पृहणीयं पन्थानम्। अपहाय कुपुरुषोचितां शुचम्, प्रतिपद्यस्व कुलक्रमागतां राजलक्ष्मीम्। देव, देवभूयं गते नरेन्द्रे, दुष्टगौडभुजंगजग्धजीविते च राज्यवर्धने, वृत्तेऽस्मिन्महाप्रलये धरणीधारणाय अधुना त्वं शेषः। समाश्वासय अशरणाः प्रजाः। क्ष्मापतीनां शिरःसु शरत्सवितेव ललाटंतपान्प्रयच्छ पादन्यासान्" इत्युक्त्वा व्यरंसीत्॥

देवस्तु हर्षस्तं प्रत्यवादीत्—"करणीयमेवेदमभिहितं मान्येन। इतरथा हि मे गृहीतभुवि भोगिनाथेऽपि दायाददृष्टिरीर्ष्यालोर्भुजस्य। तेजोदुर्विदग्धान् अर्ककरानपि चामराणि ग्राहयितुमीहते हृदयम्। अपि च, हृदयविषमशल्ये मुसल्ये जीवति जाल्मे जगद्विगर्हिते गौडाधिपाधमचण्डाले जिह्लेमि शुष्काधरपुटः

प्राग्रहरः मुख्यः। "प्रष्ठोऽग्रगामिनि"। देवस्य भावः देवभूयम्। जग्धं भक्षितम्। प्रलयः कल्पान्तः, नाशश्च। शेषः अवशिष्टः, अनन्तश्च। ललाटं तपन्तीति ललाटंतपाः। "असूर्यललाटयोर्दृशितपोः" इति खश्। पादः चरणः, किरणश्च। व्यरंसीत् "व्याङ्परिभ्यो रमः" इति परस्मैपदिनो लुङ्। मुसलं तत्प्रहारं अर्हति मुसल्यः॥

पोटेव प्रतीकारशून्यं शुचा सूत्कर्तुम् । श्रूयतां मे प्रतिज्ञा—शपाम्यार्यस्यैव पादपांसुस्पर्शेन ; यदि परिगणितैरेव वासरैर्निर्गौडां न करोमि मेदिनीम्, ततस्तनूनपाति पातकी पातयाम्यात्मानम् ॥"

इत्युक्त्वा च महासंधिविग्रहाधिकृतमवन्तिमन्तिकस्थमादिदेश—"लिख्यतां सर्वेषां राज्ञाम्—सज्जीक्रियन्तां कराः करदानाय, शस्त्रग्रहणाय वा । गृह्यन्तां दिशः, चामराणि वा । नमन्तु शिरांसि, धनूंषि वा । कर्णपूरीक्रियन्तामाज्ञाः, मौर्व्यो वा । मुच्यन्तां भूमयः, इषवो वा । परागतोऽहम्" इति । कृतनिश्चयश्च मुक्तास्थानो विसर्जितराजलोकः स्नानारम्भाकाङ्क्षी सभामत्याक्षीत् । उत्थाय च स्वस्थवन्निःशेषमाह्निकमकार्षीत् । अगलच्च दर्पप्रसर इव श्रुतप्रतिज्ञस्य शाम्यदूष्मा दिवसस्त्रिभुवनस्य ॥

ततश्च निजाधिकारापहारभीत इव भगवत्यपि क्वापि गते गततेजस्यहिमभासि, प्रदोषास्थाने नातिचिरं तस्थौ । प्रतिषिद्धपरिजनप्रवेशश्च शयनगृहं प्राविशत् । उत्तानश्च मुमोचाङ्गानि शयनतले । दीपद्वितीयं च तम् अभिसर इव लब्धावसरस्तरसा भ्रातृशोको जग्राह । जीवन्तमिव हृदये निमीलितलोचनो ददर्शाग्रजम् । मुखमाच्छाद्य निःशब्दमतिचिरं रुरोद । प्रभातायां च शर्वर्याम्, प्रातरेव प्रतीहारमादिदेश—"अशेषगजसाधनाधिकृतं स्कन्दगुप्तं द्रष्टुमिच्छामि" इति ॥

पोटा स्त्रीपुंसलक्षणा । करः राजग्राह्यो भागः । आह्निकम् अह्नि भवं नित्यकर्म ॥

अथ युगपत्प्रधावितबहुपुरुषपरंपराहूयमानः स्वमन्दिरात् अप्रतिपालितकरेणुश्चरणाभ्यामेव, संभ्रान्तः, एकभर्तृभक्तिनिश्चलां कुलाङ्गनामिवानन्यगम्यां प्रभुप्रसादभूमिमारूढः, निष्कारण-बान्धवो विदग्धानाम्, अक्रीतदासो विदुषां स्कन्दगुप्तो विवेश राजकुलम् । दूरादेव चोभयकरकमलावलम्बितं स्पृशन्मौलिना महीतलम् नमस्कारमकरोत् ॥

उपविष्टं नातिनिकटे तं तदा जगाद देवो हर्षः—"श्रुतो विस्तर एवास्यार्यव्यतिकरस्य अस्मच्चिकीर्षितस्य च ? अतः शीघ्रं प्रवेश्यन्तां प्रचारनिर्गतानि गजसाधनानि । न क्षाम्यत्यतिस्वल्प-मप्यार्यपरिभवपीडापावकः प्रयाणविलम्बम्" इति ॥

एवमभिहितश्च प्रणम्य व्यज्ञापयत्—"कृतमवधारयतु स्वामी समादिष्टम्। किं तु स्वल्पं विज्ञाप्यमस्ति भर्तृभक्तेः । तदा-कर्णयतु देवः । देवेन हि पुष्पभूतिवंशसंभूतस्य सहजस्य तेजसः, दिक्करिकरप्रलम्बस्य बाहुयुगलस्य, असाधारणस्य च सोदरस्नेहस्य सर्वं सदृशमुपक्रान्तम् । काकोदराभिधानाः कृपणाः कृमयोऽपि न मृष्यन्ति निकारम्, किमुत भवादृशास्तेजसां राशयः । केवलं देव-राज्यवर्धनोदन्तेन कियदपि दृष्टमेव देवेन दुर्जनदौरात्म्यम् । ईदृशाः खलु लोकस्वभावाः । प्रतिग्रामं प्रतिनगरं प्रतिदेशं प्रति-द्वीपं प्रतिदिशं च भिन्ना वेषाश्चाकाराश्चाहाराश्च व्यवहाराश्च । तदियमात्मदेशाचारोचिता स्वभावसरलहृदयजा त्यज्यतां सर्ववि-श्वासिता । प्रमाददोषाभिषङ्गेषु श्रुतबहुवार्त एव प्रतिदिनं देवः" इत्युक्त्वा विरराम, स्वाम्यादेशसंपादनाय च निर्जगाम ॥

देवोऽपि हर्षः सकलराज्यस्थितीश्चकार । ततश्च तथा कृतप्रतिज्ञे प्रयाणं विजयाय दिशां समादिशति देवे हर्षे, गतायुषां अतिसामन्तानामुद्वसितेषु बहुरूपाण्युपलिङ्गानि वितेनिरे ॥

इति भट्टबाणविरचिते हर्षचरिते राजप्रतिज्ञावर्णनं
नाम षष्ठ उच्छ्वासः ।

---

# ॥ सप्तम उच्छ्वासः ॥

अथ व्यतीतेषु केषुचिद्दिवसेषु, मौहूर्तिकमण्डलेन शतशः सुगणिते प्रशस्ते अहनि दत्ते चतसृणामपि दिशां विजययोग्ये दण्डयात्रालग्ने, स्नात्वा विरचय्य परमया भक्त्या भगवतो नीललोहितस्यार्चाम्, उदर्चिपं हुत्वाशुशुक्षणिम्, दत्त्वा द्विजेभ्यो रत्नवन्ति राजतानि जातरूपमयानि च सहस्रशस्तिलपात्राणि कनकपत्रलतालंकृतशफश्रृङ्गशिखरा गाश्चार्बुदशः, समुपविश्य विततव्याघ्रचर्मणि भद्रासने, विलिप्य प्रथमविलिप्तायुधश्चन्दनेन शरीरम्, परिधाय राजहंसमिथुनलक्ष्मणी दुकूले, कल्पयित्वा सितकुसुममुण्डमालिकां शिरसि, नीत्वा कर्णगोचरतां गोरोचनाच्छुरितमभिनवं दूर्वापल्लवम्, विन्यस्य सह शासनवलयेन गमनमङ्गल-

प्रतिसरं प्रकोष्ठे, शान्तिसलिलशीकराभ्युक्षितशिराः, विमुच्य बन्धनानि, प्रमुदितप्रजाजन्यमानजयशब्दकोलाहलो भवनान्निर्जगाम ॥

नातिदूरे च नगरादुपसरस्वति निर्मिते महति तृणमये मन्दिरे प्रस्थानमकरोत् । तत्रस्थस्य चास्य ग्रामाक्षपटलिकः सकलकरणिपरिकरः, "करोतु देवो दिवसग्रहणमद्यैवावन्ध्यशासनः शासनानाम्" इत्यभिधाय, वृषाङ्कामभिनवघटितां हाटकमयीं मुद्रामुपनिन्ये । जग्राह च तां राजा । समुपस्थापिते च प्रथमत एव मृत्पिण्डे परिभ्रश्य करकमलादधोमुखी महीतले पपात मुद्रा । मन्दाश्यानपङ्कपटले मृदुमृदि सरस्वतीतीरे व्यराजन्त राजयो वर्णानाम् । अमङ्गलाशङ्किनि च विषीदति परिजने नरपतिरकरोन्मनस्येवम्—"तत्त्वदर्शिन्यो नहि भवन्त्यविदग्धानां धियः । तथाहि—एकशासनमुद्राङ्का भूर्भवतो भविष्यतीति निवेदितमपि निमित्तेन अन्यथा गृह्णन्ति ग्राम्याः" इत्यभिनन्द्य महानिमित्तं तत्, सीरसहस्रसंमितसीम्नां ग्रामाणां शतमदाद्द्विजेभ्यः । निनाय च तत्र तं दिवसम् । प्रतिपन्नायां शर्वर्यां संमानितसर्वराजलोकः सुष्वाप ॥

---

अक्षाणां भूतानां व्यवहाराणां वा पटलं समूहः, तत्र नियुक्तः अक्षपटलिकः, ग्रामस्य अक्षपटलिकः ग्रामाधिकारी । करणं लेख्यं तद्वन्तः करणिनः कायस्थाः । करणयः कायस्था इत्येके । करणिः लेख्यमित्यन्ये । परिकरः परिवारः सहायः सामग्री वा । शासनानि आज्ञाः, आज्ञालेख्यानि वा । वृषः वृषभः अङ्कः यस्याः सा तां वृषाङ्काम् । आश्यानं शुष्कम् । विदग्धाः रसिकाः विवेकिनः । एकम् अद्वितीयं मुख्यं वा शासनं पालनम् एकस्य शासनं वा तस्य मुद्रा अङ्कः चिह्नं यस्याः सा । ग्रामे भवाः ग्राम्याः विवेकरहिताः ॥

अथ गलति तृतीये यामे अताड्यत प्रयाणपटहः । अग्रतः स्थित्वा च मुहूर्तमिव पुनः प्रयाणक्रोशसंख्यापकाः स्पष्टम् अष्टौ अदीयन्त प्रहाराः पटहे पटीयांसः । ततो रटत्पटहे कूजत्काहले शब्दायमानशङ्खे प्रयाणसमये, प्रतिदिशमागच्छद्भिः उद्घोष्यमाण-नामभिः उन्मुखपादातप्रतिपाल्यमानाज्ञापातैः राजभिरापुपूरे राजद्वारम् ॥

उदिते च भगवति दिनकृति, राज्ञः समायोगग्रहणसमय-शंसी सस्वान संज्ञाशङ्खो मुहुर्मुहुः । अथ नचिरादिव करेणुकयो-ह्यमानः दण्डिभिरितस्ततः समुत्सार्यमाणजनसमूहो निर्जगाम नरपतिः । अथ प्रस्थिते राजनि, इतस्ततो वितस्तार तारतरस्तू-र्याणां प्रतिध्वनिराशातटेषु । दिग्गजेभ्यः प्रकुपितानां त्रिप्रस्रुतानां करिणां मदप्रस्रवणवीथीभिरलिकुलकालीभिः कालिन्दीवेणिकास-हस्राणीव सस्यन्दिरे । दोधूयमानश्च सचराचरमाचचाम चामर-संघातो विभ्रम । सर्वतो विक्षिप्तचक्षुश्च भूपालोऽद्राक्षीत् आवा-सस्थानसकाशात्प्रतिष्ठमानं स्कन्धावारम् अधोक्षजकुक्षेरिव युगादौ निष्पतन्तं जीवलोकम् । वीक्षमाणश्च कटकं जगाम ॥

आसन्नवर्तिनां च तत्रभवताम् "मान्धात्रा प्रवर्तिताः पन्थानो दिग्विजयाय । अप्रतिहतरथरंहसा रघुणा लघुनैव कालेन अकारि ककुभां प्रसादनम् । नातिजिगीषवः खलु पूर्वे, येनाल्प एव भूभागे भूयांसो भगदत्तदन्तवक्त्रशिशुपालजरासंध-

---

समायोगः सज्जता, "समायोगस्तु संयोगे समवाये प्रयोजने" इति मेदिनी । समायोगः भूषणादिपरिकर इत्यन्ये ॥

प्रभृतयोऽभवन्भूपतयः ।" इत्येवंप्रायान् उद्योगद्योतकानालापान् पार्थिवकुमाराणां बाहुशालिनां शृण्वन्नेव आससादावासम् । मन्दिरद्वारि चोभयतः सबहुमानं भ्रूलताभ्यां विसर्जितराजलोकः, बाह्यास्थानमण्डपस्थापितमासनमाचक्राम । अपास्तसमायोगश्च क्षणमासिष्ट ॥

अथ तत्र प्रतीहारः पृथ्वीपृष्ठप्रतिष्ठापितपाणिपल्लवो विज्ञापितवान्—"देव, प्राग्ज्योतिषेश्वरेण कुमारेण प्रहितो हंसवेगो नाम दूतस्तोरणमध्यास्ते" इति । राजा तु "तमाशु प्रवेशय" इति सादरमादिदेश ॥

अथ दक्षतया क्षितिपालादराच्च प्रतीहारः स्वयमेव निरगात् । अनन्तरं च हंसवेगः सविनयं प्रभूतप्राभृतभृतां पुरुषाणां समूहेन महतानुगम्यमानः प्रविवेश राजमन्दिरम् । आरादेव च पञ्चाङ्गालिङ्गिताङ्गनः प्रणाममकरोत् । स्निग्धनरेन्द्रदृष्ट्या निर्दिष्टमविप्रकृष्टं च प्रदेशमध्यास्त । ततो राजा संमुखीनस्तं सप्रश्रयं पप्रच्छ—"हंसवेग, श्रीमान् कच्चित्कुशली कुमारः ?" इति । स तमन्ववादीत्—"अद्य कुशली, येनैवं स्नेहस्नपितया सगौरवं गिरा पृच्छति देवः" इति ॥

स्थित्वा च मुहूर्तमिव पुनः स चतुरमुवाच—"चतुरम्भोधिभोगभूतिभाजनभूतस्य देवस्य सद्भावगर्भमपहाय हृदयमेकम्, अन्यदनुरूपं प्राभृतमेव दुर्लभं लोके । तथाप्यस्मत्स्वामिना संदेशमशून्यतां नयता पूर्वजोपार्जितं वारुणातपत्रम् आभोगाख्यम् अनुरूपस्थानन्यासेन कृतार्थीकृतमेतत् । अस्य च कुतूहलक्रान्ति

बहून्याश्चर्याणि दृश्यन्ते—प्रतिदिवसं प्रविशति शैत्यहेतोश्छायायाः किरणसहस्रादेकैकः सोमस्य रश्मिरस्मिन् । अस्मिन्प्रविष्टे प्रध्यानानन्तरं स्वादवो दन्तवीणोपदेशाचार्याश्च्योतन्ति चन्द्रभासामम्भसां मणिशलाकाभ्यो यावदिच्छमच्छा धाराः । प्रचेता इव यश्चतुर्णामर्णवानामधिपतिर्भूतो भावी वा, तमनुगृह्णाति छायया नेतरम् । इदं च न सप्तार्चिर्दहति, न पृषदश्वो हरति, नोदकमार्द्रयति, न रजांसि मलिनयन्ति, न जरा जर्जरयति । एतत्तावदनुगृह्णातु दृशा देवः । संदेशमपि विस्रब्धं श्रोष्यति" इत्येवमभिधाय विसृत्य, आत्मीयं पुरुषमभ्यधात्—"उत्तिष्ठ, दर्शय देवस्य" इति ॥

स वचनानन्तरमुत्थाय पुमान् ऊर्ध्वीचकार तत्, धौतदुकूलकल्पिताच्च निचोलकादकोपीत् । आकृष्यमाण एव च यस्मिन् अतिसितमहसि, सरभसमहासीव हरेण, रसातलादुदलासीव शेषफणिफणाफलकमण्डलेन, अस्थायीव चक्रीभूयान्तरिक्षे क्षीरोदेन ॥

चित्रीयमाणचेताश्च सराजको राजा दण्डानुसाराधिरोहिण्या दृष्ट्या सादरम् ऐक्षिष्ट तत् तिलकमिव त्रिभुवनस्य, शैशवमिव श्वेतद्वीपस्य, अंशावतारमिव शरदिन्दोः, हृदयमिव धर्मस्य, उपरिस्थितमिव सर्वमङ्गलानाम्, श्वेतमण्डपमिव श्रियः, हासमिव कीर्तेः, त्रैलोक्याद्भुतं महच्छत्रम् ॥

दृष्टे च तस्मिन्प्रथमे, शेषमपि प्राभृतं प्रकाशयांचक्रुः क्रमेण

---

निचोलकः प्रच्छदपटः । क्षीरम् उदकं यस्य सः क्षीरोदः । चित्रीयमाणं विस्मयमानम् । राज्ञां समूहः राजकम् । प्राभृतम् उपहारः ॥

कार्माः; तद्यथा—आहतलक्षणानलंकारान्, अनेकरागरुचिरवेत्रकरण्डकुण्डलीकृतानि शरच्चन्द्रमरीचिरुञ्चि शौचक्षमाणि क्षौमाणि, अगरुवल्कलकल्पितसंचयानि च सुभाषितभाञ्जि पुस्तकानि, कुतूहलकृन्ति कनकशृङ्खलानियमितग्रीवाणां किंनराणां च वनमानुषाणां च जीवञ्जीवकानां च जलमानुषाणां च मिथुनानि, जलहस्तिनाम् बद्ग्रकुम्भमुक्ताफलदामदन्तुराणि च दन्तकाण्ड-कुण्डलानि ॥

राजा तु छत्रदर्शनात्प्रहृष्टहृदयः प्रथमप्रयाणे शोभनं निमित्त-मिति मनसा जग्राह। हंसवेगं च प्रीयमाणो बभाषे—"भद्र, सकलरत्नधाम्नः परमेश्वरशिरोधारणार्हस्यास्य महातपत्रस्य महार्ण-वादिव कुमुदबान्धवस्य कुमाराल्लाभो न विस्मयाय। बाल-विद्याः खलु महतामुपकृतयः" इति। अपनीते च तस्मात्प्रदेशा-त्प्राभृतसंभारे, क्षणमिव स्थित्वा "हंसवेग, विश्रम्यताम्" इति प्रतीहारभवनं विसर्जयांबभूव। स्वयमप्युत्थाय स्नात्वा मङ्गला-काङ्क्षी प्राङ्मुखः प्राविशदाभोगस्य छायाम्। अथ विशत एवास्य छायाजन्मना जडिम्ना चूडामणितामनीयतेव शशिबिम्बम्। अम्बु-बिन्दुमुचश्चुचुम्बुरिव चन्द्रकान्तमणयो ललाटतटम्। कर्पूररेणव

कार्माः कर्मशीलाः। "कार्मस्ताच्छील्ये"। आहतलक्षणान् गुणैः प्रथितान्। "गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ" इत्यमरः। शौचं निर्णेजनम्। दाम श्रेणिः। सकलानां रत्नानां मणीनां श्रेष्ठवस्तूनां च धाम वासस्थानं तस्मात्। इदं महार्णवकुमारयोर्विशेषणम्। परमेश्वरः शिवः, प्रकृष्टः प्रभुश्च। इदं च महातपत्रकुमुदबान्धवयोर्विशेषणम्। संभारः समूहः॥

इव व्यलीयन्त लोचनयुगले । कुमुदमयमिव हृदयमभवत् । जातविस्मयश्चाकरोन्मनसि—"एकमजर्यं संगतमपहाय कास्त्यन्या प्रतिकौशलिका" इति । आहारकाले च हंसवेगाय विलिप्तशेषं चन्दनम्, अङ्गस्पृष्टे च वाससी, परिवेशं नाम कटिसूत्रम्, तरङ्गकं नाम कर्णाभरणम्, प्रभूतं च भोज्यजातं प्राहिणोत् । एवंप्रायेण च क्रमेण जगाम दिवसः ॥

ततः कटकस्थबलबहुलधूलिधूसरितवपुः अंशुमाली, मलीमसमङ्गमिव क्षालयितुमपरजलनिधिमवातरत् । आभोगातपत्रप्रदानवार्तामिव निवेदयितुं वरुणाय वारुणीं दिशमयासीत् । अस्यां च वेलायां विततवितानतलवर्ती नरेन्द्रः, 'यात तावत्' इति विसर्ज्यानुजीविनः, हंसवेगमादिष्टवान्—'कथय संदेशम्' इति ॥

प्रणम्य स कथयितुं प्रास्तावीत्—"देव, पुरा वराहसंपर्कसंभूतगर्भया भगवत्या भुवा नरको नाम सूनुरसावि रसातले । यश्च वरुणस्य बहिर्वृत्ति हृदयम् इदमातपत्रमहार्षीत् । महात्मनस्तस्यान्वये भगदत्तपुष्पदत्तवज्रदत्तप्रभृतिषु व्यतीतेषु बहुषु महीपालेषु प्रपौत्रो महाराजभूतिवर्मणः पौत्रश्चन्द्रमुखवर्मणः पुत्रो देवस्य कैलासस्थिरस्थितेः स्थितिवर्मणः सुस्थिरवर्मा नाम महाराजाधिराजो जज्ञे तेजसां राशिः ; मृगाङ्क इति यं जना जगुः । तस्य च सुगृहीतनाम्नो देवस्य देव्यां श्यामादेव्यां भास्करद्युतिर्भास्करवर्मापरनामा कुमारः समभवत् ॥

---

न जीर्यतीति अजर्यम् । "अजर्यं संगतम्" । प्रतिकौशलिका प्रत्युपहारः ॥

अयमस्य च शैशवादारभ्य संकल्पः स्थेयान्—स्थाणुपादारविन्दद्वयात् ऋते नाहमन्यं नमस्कुर्यामिति। ईदृशश्चायं मनोरथस्त्रिभुवनदुर्लभस्त्रयाणामन्यतमेन संपद्यते—सकलभुवनविजयेन वा, मृत्युना वा, यदिवा जगत्येकवीरेण देवोपमेन मित्रेण। मैत्री च प्रायः कार्यव्यपेक्षिणी क्षोणीभृताम्। कार्यं च कीदृशं नाम तद्भवेत् यदुपन्यस्यमानं मित्रतामुपनयेद्देवम्। देवस्य हि यशांसि संचिचीषतो बहिरङ्गभूतानि साधनानि। बाहावेव च केवले निषण्णस्य शेषावयवानामपि साहायकसंपादनमनोरथो निरवकाशः, किमुत बाह्यजनस्य। तदत्र प्रार्थनामात्रमेव केवलमनुरुध्यमानः शृणोतु देवः—प्राग्ज्योतिषेश्वरो हि देवेन एकपिङ्ग इवानङ्गद्विषा, धनंजय इव पुष्कराक्षेण, मलयानिल इव माधवेन, अजर्यं संगतमिच्छति। यदि च देवस्यापि मैत्रीयति हृदयम्, अवगच्छति च—पर्यायान्तरितं दास्यमनुतिष्ठन्ति सुहृद इति, ततः किमास्यते? समाज्ञाप्यताम्। अनुभवतु गाढोपगूढानि देवस्य कामरूपाधिपतिः। नाभिनन्दति चेद्देवः प्रणयम्, आज्ञापयतु—किं कथनीयं मया स्वामिने?" इति॥

विरतवचसि तस्मिन्, भूपालः सादरं जगाद—"हंसवेग, कथमिव तादृशि महात्मनि महाभिजने पुण्यराशौ गुणिनां प्राग्रहरे परोक्षसुहृदि स्निह्यति, मद्विधस्यान्यथा स्वप्नेऽपि प्रवर्तेत मनः। सुबहुगुणगणक्रीताश्च के वयं सख्यस्य। सज्जनमाधुर्याणाम्

---

सख्युः भावः कर्म वा सख्यम्॥

अभृतदास्यो दश दिशः । श्रेयांश्च संकल्पः कुमारस्य । स्वयं बाहुशाली मयि च समालम्बितशरासने सुहृदि हरात् ऋते कमन्यं नमस्यति ? संवर्धिता मे प्रीतिरमुना संकल्पेन । अवलेपिनि पशावपि केसरिणि बहुमानो मे हृदयस्य, किंपुनः सुहृदि । तत्तथा यतेथाः, यथा न चिरमियस्मान्क्लेशयति कुमारदर्शनोत्कण्ठा" इति ॥

हंसवेगस्तु विज्ञापयांबभूव—"देव, किमपरमिदानीं क्लेशयति ? अभिजातमभिहितं देवेन । सेवाभीरवो हि सन्तः । तत्रापि विशेषेणायमहंकारधनो वैष्णवो वंशः । आस्तां तावदस्मत्स्वामिवंशः । पश्यतु देवः—पुरुषस्य हि सेवां प्रति दुर्जनन्येवातिवृद्धया दुर्गत्या वा अभिमुखीक्रियमाणस्य, कुटुम्बिन्येवासंतुष्टया तृष्णया वा प्रेर्यमाणस्य, दुरपत्यैरिव यौवनजनितैर्नानाभिलाषिभिरसत्संकल्पैर्वा आकुलीक्रियमाणस्य, नृपशोस्तृणेऽपि लब्धे कंधरामवनमयतः, जठरपरिपूरणमात्रप्रयोजनजन्मनो मांसपिण्डस्य गर्भरोगस्य मातुः भृतकस्य किं प्रायश्चित्तम् ? का प्रतिक्रिया ? क गतस्य शान्तिः ? कीदृशम् जीवितम् ? कः पुरुषाभिमानः ? किंनामानो विलासाः ? कीदृशी भोगश्रद्धा ? प्रबलपङ्क इव सर्वमधस्तान्नयति दारुणो दासशब्दः धिक् तदुच्छ्वसितम् । उपयातु तद्धनं निधनम् । अभवनिर्भूतेरस्तु तस्याः ।

---

अभृताः सत्यः दास्यः वेतन विना परिचारिकाः । अभिजातं न्याय्यम् , रमणीयं वा । दुर्गतिः दैन्यम् । भृतकः सेवकः । निधनं नाशम् । अभवनिः अनुत्पत्तिः । "आक्रोशे नञ्यनिः" ॥

नमस्तेभ्यः सुखेभ्यः । तिष्ठतु दूर एव सा श्रीः । यदर्थमुत्तमाङ्गं गां गमिष्यति । (यदि) वराकः सेवकोऽपि मर्त्यमध्ये, (तदा) राजिलोऽपि वा भोगी, पुलाकोऽपि वा कलमः । तदेवमभिनन्दितास्मदीयप्रणयो देवोऽपि, दिवसैः कतिपयैरेव परागतः प्राग्ज्योतिषेश्वर इति करोतु चेतसि" इत्युक्त्वा तूष्णीमभूत् । अचिराच्च नमस्कृत्य निर्जगाम ॥

राजापि रजनीं तां कुमारदर्शनौत्सुक्यस्वीकृतहृदयः समनैषीत् । आत्मार्पणं हि महताममूलमन्त्रमयं वशीकरणम् । प्रभाते च प्रभूतं प्रतिप्राभृतं प्रधानप्रतिदूताधिष्ठितं दत्त्वा हंसवेगं प्राहिणोत् । आत्मनापि ततः प्रभृति प्रयाणकैरनवरतैरभ्यमित्रं प्रावर्तत ॥

कदाचित्तु राज्यवर्धनभुजबलोपार्जितमशेषं मालवराजसाधनमादायागतं समीप एवावासितं लेखहारकाद्भण्डिमश्रृणोत् । श्रुत्वा चाभिनवीभूतभ्रातृशोकहुताशनः कातरहृदयो बभूव । अतिष्ठच्च समुत्सृष्टसकलव्यापारः, प्रतीहारनिवारणनिभृतनिःशब्दपरिजने निजमन्दिरे सराजकपरिवारः, तदागमनमुदीक्षमाणो मुहूर्तम् ॥

अथ भण्डिरेकेनैव वाजिना कतिपयकुलपुत्रपरिवृतो मलिनवासाः, पातकीव अपराधीव द्रोहीव मुषित इव राजद्वारमाजगाम । अवतीर्य च तुरंगमादवनतमुखो विवेश राजमन्दिरम्

---

राजिलः निर्विषो द्विमुखः सर्पः । पुलाकः तुच्छधान्यम् । मूलम् ओषधिमूलम्, औषधमिति तात्पर्यम् । अभ्यमित्रं शत्रुमभिमुखीकृत्य आवासितं संजातावासम् । निभृतः निश्चलः ॥

दूरादेव च विमुक्ताक्रन्दः पपात पादयोः । अवनिपतिरपि दृष्ट्वा तम् उत्थाय विरलैः पदैः प्रत्युद्गम्य उत्थाप्य च गाढमुपगुह्य कण्ठे करुणमतिचिरं रुरोद । शिथिलीभूतमन्युवेगश्च पुरेव पुनरागत्य निजासने निषसाद । प्रथमप्रक्षालितमुखे च भण्डौ मुखमक्षालयत् । समतिक्रान्ते च कियत्यपि काले भ्रातृमरणवृत्तान्तमप्राक्षीत् । अथाकथयच्च यथावृत्तमखिलं भण्डिः । अथ नरपतिस्तमुवाच—"राज्यश्रीव्यतिकरः कः ?" इति । स पुनरवादीत्—"देव, देवभूयं गते देवे राज्यवर्धने, गुप्तनाम्ना च गृहीते कुशस्थले, देवी राज्यश्रीः परिभ्रश्य बन्धनाद्विन्ध्याटवीं सपरिवारा प्रविष्टेति लोकतो वार्तामश्रृणवम् । अन्वेष्टारस्तु तां प्रति प्रभूताः प्रहिता जना नाद्यापि निवर्तन्ते" इति । तच्चाकर्ण्य भूपतिरब्रवीत्—"किमन्यैरनुपदिभिः । यत्र सा, तत्र परित्यक्तान्यकृत्यः स्वयमहं यास्यामि । भवानपि कटकमादाय प्रवर्ततां गौडाभिमुखम्" इत्युक्त्वा चोत्थाय स्नानभुवमगात् । कारितशोकश्मश्रुवपनकर्मणा च प्रतीहारभवनस्नातेन भण्डिना सार्धमभुक्त । निनाय च तेनैव सह वासरम् ॥

अथापरेद्युरुषस्येव भण्डिः, भूपालमुपसृत्य व्यज्ञापयत्—"पश्यतु देवः श्रीराज्यवर्धनभुजबलार्जितं साधनं सपरिबर्हं मालवराजस्य" इति । नरपतिना सः "एवं क्रियताम्" इत्यभ्यनुज्ञातो दर्शयांबभूव । अथालोच्य तत्सर्वमवनिपालः स्वीकर्तुं यथाधि-

---

उपगुह्य आलिङ्ग्य । अनुपदम् अन्वेष्टारः अनुपदिनः । "अनुपद्यन्वेष्टा" । कटकं सैन्यम् । परिबर्हाः राजकीयवस्तूनि ॥

कारमादिक्षदध्यक्षान् । अन्यस्मिंश्चाहनि, हयैः स्वसारमन्वेष्टु-मुच्चचाल विन्ध्याटवीम्, अवाप च परिमितैरेव प्रयाणकैस्ताम् ॥

अथ प्रविशन् दूरादेव दह्यमानषष्टिकबुसविसराविसारिविभावसूनां वन्यधान्यबीजधानीनां धूमेन धूसरिमाणमादधानैः शुष्कशाखासंचयरचितगोवाटवेष्टितविकटवटैः व्यापादितवत्सरूप-करोषरचितव्याघ्रयन्त्रैः यन्त्रितवनपालहठह्रियमाणपरग्रामीणकाष्ठिककुठारैः गहनतरुषण्डनिर्मितचामुण्डामण्डपैर्वनप्रदेशैः प्रकाशमानम्, अटवीप्रायप्रान्ततया कुटुम्बभरणाकुलैः कुद्दालप्रायकृषिभिः कृषीवलैर्भज्यमानभूरिशालिखलक्षेत्रखण्डकम्, उपक्षेत्रमुपरचितैरुच्चैर्मञ्चैश्च सूच्यमानश्वापदोपद्रवम्, दिशि दिशि च प्रतिमार्गद्रुमकृतानाम् अध्वगजनजग्धजम्बूफलास्थिशबलसमीपभुवाम्

---

षष्टिकानां षष्टिरात्रेण पच्यमानानां धान्यानां बुसाः कडङ्गराः । "षष्टिकाः षष्टिरात्रेण पच्यन्ते" । विभावसुः अग्निः । बीजधानी बीजावापक्षेत्रम्, नात्तङ्काल् इति द्रविडभाषायां प्रसिद्धम् । गोवाटः गोबन्धनस्थानम्, माट्टुप्पट्टि इति यस्य भाषायां प्रसिद्धिः । विकटः विशालः । वत्सरूपकाः प्रशस्ता वत्सतराः । यन्त्रिताः अधिकृताः, अयन्त्रितेति पाठे स्वतन्त्रा इत्यर्थः । परग्रामीणाः ग्रामान्तरादागताः । काष्ठैः जीवन्ति दीव्यन्ति वा, काष्ठं पण्यम् एषामिति वा काष्ठिकाः काष्ठजीविनः । कुद्दालो नाम धान्यविशेषः, तत्प्राया तत्प्रचुरा कृषिः येषां तैः । कुद्दालः मलैयकत्ति इति द्राविडाः । व्रीहिभेद इत्यन्ये । कृषिः एषामस्तीति कृषीवलाः कर्षकाः । भज्यमानाः मृद्यमानाः भूरयः शालयः धान्यविशेषः येषु ते, तादृशाः खलक्षेत्राणां खण्डाः यस्मिन् तत् तादृशम् । खलक्षेत्रं नाम कळमिति भाषायां प्रसिद्धम् । श्वापदः दुष्टमृगः ॥

उदकुम्भाकृष्टपाटलशर्कराशकलशिशिरीकृतदिशां घटमुखघटितकरहाटपाटलपुष्पपुटानाम् अटवीप्रवेशप्रपाणां शैत्येन त्याजयन्तमिव ग्रैष्ममूष्माणम्, कचिदन्यत्र ग्राहयन्तमिव अङ्गारीयदारुसंग्रहदाहिभिः व्योकारैः, सर्वतश्च प्रातिवेश्यविषयवासिनां समासन्नग्रामगृहस्थापितस्थविरपरिपाल्यमानपाथेयस्थगितेन कृतदारुणदारुव्यायामयोग्याङ्गाभ्यङ्गेन स्कन्धाध्यासितकठोरकुठारकण्ठलम्बमानप्रातराशपुटेन पाटच्चरप्रत्यवायप्रतिपन्नपटच्चरेण काष्ठसंग्रहार्थमटवीं प्रविशता नैकटिककुटुम्बिलोकेन व्याप्तदिगन्तरम्, अतिविप्रकृष्टान्तरैः मरकतस्निग्धस्नुहीवाटवेष्टितैः कार्मुककर्मण्यवंश-

पाटलाः श्वेतरक्ताः, शर्कराः पानककलनाय उदकुम्भेषु निक्षिप्ताः मधुराः खण्डविकृतयः । जलनैर्मल्याय पाटलवर्णाः दृषत्कणा निक्षिप्यन्त इत्यन्ये । शैत्याय उदकुम्भानामधस्तात् आर्द्राः सिकताः प्रक्षिप्यन्त इति तदभिप्रायेणेदमिति परे । घटमुखेषु घटिताः स्थापिताः करहाटानां पद्मकन्दानां पाटलपुष्पाणां च पुटाः यासु ताः तादृश्यः । प्रपाः पानीयशालाः । अङ्गारेभ्य इमानि अङ्गारीयाणि । "तदर्थं विकृतेः प्रकृतौ" इति छः । "व्योकारो लोहकारकः" इत्यमरः । प्रातिवेश्यविषयः समीपस्थो देशः । समासन्नं यत् ग्रामगृहं ग्रामचावटि इति भाषायां प्रसिद्धं तत्र स्थापितानि यानि स्थविरपरिपाल्यमानानि पाथेयानि मार्गगमनोपयोगीनि अपूपादीनि तैः स्थगितेन तत्क्रयणाय किंचित्कृतविलम्बेन । समासन्नो यो ग्रामः तत्रत्ये गृहे स्थापितः स्थविरः वृद्धः, तेन परिपाल्यमानैः पाथेयैः स्थगितेन व्याप्तेन सहितेन वेति केचित् । व्यायामः देहश्रमः । अभ्यङ्गः तैलानुलेपनम् । प्रातराशपुटः कल्यवर्तमूतः । गृहं पाटयन् चरतीति पाटच्चरः तस्करः । प्रत्यवायः दोषः पीडेति यावत् । प्रतिपन्नं स्वीकृतम् । पटच्चरं जीर्णवस्त्रम् । निकटे भवः नैकटिकः । वाटः श्रेणिः । कर्मणि साधवः कर्मण्याः । कर्मणे प्रभवति कार्मुकम् । कार्मुककर्मण्याः धनुष्करणयोग्याः वंशविटपा वेणुशाखाः तैः संकटानि व्याप्तानि तैः ॥

विटपसंकटैः कथमपि कुक्कुटरटितानुमीयमानसंनिवेशैः वेणुपोट-दलनलशरमयवृतिविहितभित्तिभिः शाल्मलीफलतूलसंचयबहुलैः संनिहितनलशालिशालूरखण्डकुमुदबीजवेणुतण्डुलैः अटवीकुटुम्बिनां गृहैरुपेतं वनग्रामकं ददर्श । तत्रैव चावसत् ॥

इति भट्टबाणविरचिते हर्षचरिते छत्रलब्धिर्नाम
सप्तम उच्छवासः ।

---

## ॥ अष्टम उच्छ्वासः ॥

अथापरेद्युरुत्थाय पार्थिवस्तस्माद्ग्रामकान्निर्गत्य विवेश विन्ध्याटवीम् । आट च तस्यामितश्चेतश्च सुबहून् दिवसान् ॥

एकदा तु भूपतेर्भ्रमत एव आटविकसामन्तशरभकेतोः सूनुर्व्याघ्रकेतुर्नाम, कुतोऽपि, कज्जलश्यामलम्, श्यामलतावलयेन अधिललाटमुच्चैःकृतमौलिबन्धम्, अन्धकारिणीमकारणभुवा भ्रुकुटिभङ्गेन त्रिशाखेन त्रियामामिव साहससहचारिणीं ललाट-

संनिवेशः स्थितिः । वेणुपोटदलाः पाटितानां वेणूनां शलाकाः । नलशरौ तृणविशेषौ । पोटगलेति पाठे पोटगलः तृणविशेषः । शालूरखण्डाः कल्हारादिकन्दसमूहाः । शालूकेति पाठान्तरम् । शालूकं पद्ममूलमिति शंकरः । वेणुतण्डुल इत्येकम्, भिन्नं वा पदम् ॥

स्थलीं सदा समुद्वहन्तम्, अवतंसितैकशुकपक्षकप्रभाहरितायमानेन पिनद्धकाचरकाचमणिकर्णिकेन श्रवणेन शोभमानम्, किंचिच्चुल्लस्य प्रविरलपक्ष्मणश्चक्षुषः सहजेन रागरोचिषा रसायनरसोपयुक्तं तारक्षवं क्षतजमिव क्षरन्तम्, अवनाटनासिकम्, चिपिटाधरम्, चिकिनचिबुकम्, जंगममिव गिरितटतमालपादपम्, पाकलं करिकुलानाम, धूमकेतुं मृगराजचक्राणाम्, महानवमीमहं महिषमण्डलानां शबरयुवानमादाय आजगाम ॥

दूरे च स्थापयित्वा विज्ञापयांबभूव—"देव, सर्वस्यास्य विन्ध्यस्य स्वामी सर्वपल्लीपतीनां प्राग्रहरः शबरसेनापतिर्भूकम्पो नाम। तस्यायं निर्घातनामा स्वस्रीयः सकलस्यास्य विन्ध्यकान्तारस्य पर्णानामप्यभिज्ञः, किमुत प्रदेशानाम्। एनं पृच्छतु देवः। योग्योऽयमाज्ञां कर्तुम्" इति कथिते च निर्घातः क्षितितलनिहितमौलिः प्रणाममकरोत्। उपनिन्ये च तित्तिरिणा सह शशोपायनम् ॥

अवनिपतिस्तु संमानयन्, स्वयमेव तमप्राक्षीत्—"अङ्ग, अभिज्ञा यूयमस्य सर्वस्योद्देशस्य। विहारशीलाश्च दिवसेष्वेतेषु

---

काचरः कपिलः। कर्णिका कर्णभूषणम्। "कर्णललाटात्कन्नलंकारे"। चुल्लं क्लिन्नम्। रसायनम् औषधविशेषः। तरक्षूणां व्याघ्राणामिदं तारक्षवम्। अवनाटचिपिटचिकिनशब्दाः प्रकृते नतार्थकाः। शंकरस्तु "अवनाटः निम्नः। चिपिट. स्थूल ईषल्लम्बश्च। चिकिनं स्थूलेषद्ध्रस्वम्। चिबुकम् अधराधः" इति लिखति। पाकलः हस्तिज्वरः। महः उत्सवः। महानवमी आश्वयुजशुक्लाष्टमी मूलनक्षत्रयुता। महानवम्यां महिषा देव्यै विशस्यन्ते। पल्ली ग्रामटिका। स्वसुः अपत्यं स्वस्रीयः।

भवन्तः। सेनापतेर्वा अन्यस्य वा तदनुजीविनः कस्यचिदुदाररूपा नारी आगता भवेद्दर्शनम् ?" इति। निर्घातस्तु भूपालालापनप्रसादेनात्मानं बहुमन्यमानः, दर्शितादरं व्यज्ञापयत्—"देव, प्रायेणात्र हरिण्योऽपि नापरिगताः संचरन्ति सेनापतेः, कुत एव नार्यः। नाप्येवंरूपा काचिदबला। तथापि देवादेशादिदानीमन्वेषणं प्रति प्रतिदिनमनन्यकृत्यैः क्रियते यत्नः। इतश्चार्धगव्यूतिमात्र एव मुनिमहिते महति महीधरमालामूलरुहि महीरुहषण्डे पिण्डपाती प्रभूतान्तेवासिपरिवृतः पाराशरी दिवाकरमित्रनामा गिरिनदीमाश्रित्य प्रतिवसति। स यदि विन्देद्वार्ताम्" इति॥

तच्छ्रुत्वा नरपतिरचिन्तयत्—"श्रूयते हि तत्रभवतः सुगृहीतनाम्नः स्वर्गतस्य ग्रहवर्मणो बालमित्रं मैत्रायणीयस्त्रयीं विहाय ब्राह्मणायनो विद्वानुत्पन्नसमाधिः सौगते मते युवैव काषायाणि गृहीतवानिति। प्रायशश्च जनस्य जनयति सुहृदपि दृष्टो भृशमाश्वासम्। अभिगमनीयाश्च गुणाः सर्वस्य। कस्य न प्रतीक्ष्यो मुनिभावः। भगवती वैधेयेऽपि धर्मगृहिणी गरिमाणमापा-

---

अपरिगताः अज्ञाताः। "गव्यूतिः स्त्री क्रोशयुगम्"। पिण्डपातः अस्यास्तीति पिण्डपाती भैक्षोपजीवी। अन्ते समीपे वसन्तीति अन्तेवासिनः शिष्याः। पाराशर्येण व्यासेन प्रोक्तं भिक्षुसूत्रमधीते पाराशरी भिक्षुः। मैत्रायणीयः यजुर्वेदमैत्रायणीयशाखानुयायी। त्रयी वेदः। ब्राह्मणस्य अपत्यं ब्राह्मणायनः। "ब्राह्मणायनः द्विजवरिष्ठः" इति शंकरः। त्रयीं विहाय ब्राह्मणायनः—वेदाध्ययनं विना अन्येषां ब्राह्मणकृत्यानामनुष्ठाता। त्रयीं विहाय गृहीतवानिति संबन्ध इत्येके। समाधिः नियमः, चित्तैकाग्र्यं वा। मनस्सङ्ग इत्यन्ये। सौगते बौद्धे। प्रतीक्ष्यः पूज्यः॥

ध्यति प्रव्रज्या, किं पुनः सकलजनमनोमुषि विदुषि जने । यतो नः कुतूहलि हृदयमभूत्सततमस्य दर्शनं प्रति । प्रासङ्गिकमेवेदमापतितमतिकल्याणम् । पश्यामः प्रयत्नप्रार्थितदर्शनं जनम्" इति । प्रकाशं चाब्रवीत्—"अङ्ग, समुपदिश तमुद्देशम् ; यत्रास्ते स पिण्डपाती" इति । एवमुक्त्वा च तेनैवोपदिश्यमानवर्त्मा प्राववर्तत गन्तुम् ॥

अथ क्रमेण गच्छत एव तस्य अनवकेशिनः, कुड्मलितकर्णिकाराः, प्रचुरचम्पकाः, स्फीतफलेग्रहयः, फलभरभरितनमेरवः, नीलदलनलदनारिकेलनिकराः, प्रचुरपूगफलाः, परिमलघटितघ्राणतृप्तयः, मरकतमणिश्यामलाः क्रीडापर्वतका इव वसन्तस्य, तनया इवाटवीजाता विन्ध्यस्य, पातालान्धकारराशय इव भित्त्वा भुवमुत्थिताः, इन्द्रनीलमयाः प्रासादा इव वनदेवतानां पुरस्ताद्दर्शनपथमवतेरुस्तरवः ॥

ततो नरपतेरभवन्मनसि—अदूरवर्तिना खलु भवितव्यं भदन्तेनेति । अवतीर्य च गिरिसरिति समुपस्पृश्य, अस्मिन्नेव प्रदेशे स्थापयित्वा वाजिसेनाम्, अवलम्ब्य च तपस्विजनदर्शनोचितं विनयं हृदयेन, विरलैरेव राजभिरनुगम्यमानः, चरणाभ्यामेव प्रावर्तत गन्तुम् ॥

अथ तेषां तरूणां मध्ये, नानादेशीयैः स्थानस्थानेषु स्थाणूनाश्रयद्भिः शिलातलेषूपविष्टैः लताभवनान्यध्यावसद्भिः तरुमूलानि

---

प्रव्रज्या संन्यासः । अवकेशी अफलः । फलानि गृह्णन्तीति फलेग्रहयः । "फलेग्रहिरात्मंभरिश्च" । स्थाणून् शङ्कून् ॥

निषेवमाणैर्वीतरागैरार्हतैर्मस्करिभिः श्वेतपटैः पाण्डुरिभिक्षुभिर्भागवतैर्वर्णिभिः कापिलैर्लोकायतिकैः काणादैरौपनिषदैरीश्वरकारणिकैः कारंधमिभिर्धर्मशास्त्रिभिः पौराणिकैः साप्ततन्तवैः शाब्दैः पाञ्चरात्रिकैरन्यैश्च स्वान् स्वान् सिद्धान्तान् शृण्वद्भिरभियुक्तैश्चिन्तयद्भिश्च संशयानैश्च निश्चिन्वद्भिश्च विवदमानैश्च व्याचक्षाणैश्च शिष्यतां प्रतिपन्नैर्दूरादेवात्रेव्यमानम्, अतिविनीतैः कपिभिरपि चैत्यकर्म कुर्वाणैस्त्रिसरणपरैः परमोपासकैः शुकैरपि शाक्यशासनकुशलैः कोशं समुपदिशद्भिः अनवरतश्रवणगृहीतालोकैः कौशिकैरपि बोधिसत्त्वजातकानि जपद्भिः उपास्यमानम्, आसनोपान्तोपविष्टविस्रब्धानेककेसरिशावकतया मुनिपरमेश्वरम् अकृत्रिम इव सिंहासने निषण्णम्, उपशममिव पिबद्भिर्वनहरिणैर्जिह्वालताभिरुपलिह्यमानपादपल्लवम्, वामकरतलनिविष्टेन नीवारमश्नता पारावतपोतेन कर्णोत्पलेनेव प्रियां मैत्रीं प्रसादयन्तम्, इतरकरकिसलयनखमयूखलेखाभिर्जनितजनव्यामोहमुद्ग्रीवं मयूरं मरकतमणि-

---

आर्हताः जैनाः। भागवताः विष्णुभक्ताः। वर्णिनः ब्रह्मचारिणः। कापिलाः सांख्याः। ईश्वरकारणिकाः नैयायिकाः। कारंधमिनः धातुवादिनः। सप्ततन्तुः यागः, साप्ततन्तवाः मीमांसकाः। पाञ्चरात्रिकाः वैष्णवभेदाः। अभियुक्ताः व्यवस्यन्तः। चैत्यं बुद्धालयः बुद्धबिम्बं वा। त्रयाणां सरणानां मार्गाणाम् उपायानां समाहारः त्रिसरणम्। त्रिशरणेति पाठान्तरम्। बुद्धः धर्मः संघश्चेति त्रीणि सरणानि। शाक्यः बुद्धः। कोशः वसुबन्धुकृतः बौद्धसिद्धान्तग्रन्थ इति शंकरः। आलोकः ज्ञानं प्रकाशश्च। कौशिकाः उलूकाः। बोधिसत्त्व इति बुद्धस्य पूर्वजन्मनाम। जातकानि पूर्वजन्मकथाः। "बोधिः समाधिः तत्प्रधानं सत्त्वं बुद्धभट्टारकः तदीयानि जातकानि जीमूतवाहनादिजन्मकथाः" इति शंकरः। मैत्रीम् अपकारिण्यपि प्रीतिम्॥

करकमिव वारिधाराभिः पूरयन्तम्, इतस्ततः पिपीलकश्रेणीनां श्यामाकतण्डुलकणान् स्वयमेव विकिरन्तम्, अरुणेन चीवरपटलेन म्रदीयसा संवीतम्, अनौद्धत्यादधोमुखेन मन्दमुकुलितकुमुदाकारेण स्निग्धधवलप्रसन्नेन चक्षुषा जनक्षुण्णक्षुद्रजन्तुजीवनार्थममृतमिव वर्षन्तम्, सर्वशास्त्राक्षरपरमाणुभिरिव निर्मितम्, परमसौगतमपि अनवलोकितेश्वरम्, आलोकमिव यथावस्थितसकलपदार्थप्रकाशकं दर्शनार्थिनाम्, सुगतस्याप्यभिगमनीयमिव, धर्मस्याप्याराधनीयमिव, जन्म यमस्य, नेमिं नियमस्य, तत्त्वं तपसः, शरीरं शौचस्य, कोशं कुशलस्य, वेश्म विश्वासस्य, सर्वस्वं सर्वज्ञतायाः, पारं परानुकम्पायाः, मध्यमे वयसि वर्तमानं दिवाकरमित्रमद्राक्षीत् । अतिप्रशान्तगम्भीराकारारोपितबहुमानश्च दूरादेव शिरसा मनसा वचसा च ववन्दे ॥

दिवाकरमित्रस्तु मैत्रीमयः प्रकृत्या, विशेषतस्तेनापरेणादृष्टपूर्वेणामानुपलोकोचितेन भ्राजिष्णुना भूपतेरप्राकृतेन आकारविशेषेण तेन चाभिजात्यप्रकाशकेन गरीयसा प्रश्रयेण आह्लादितः, चक्षुषि च चेतसि च युगपदग्रहीत् । धीरस्वभावोऽपि संपादितससंभ्रमाभ्युत्थानः उत्क्षिप्य दक्षिणं हस्तम्, मधुरया वाचा सगौरवमारोग्यदानेन राजानमन्वग्रहीत् । अभ्यनन्दच्च स्वागतगिरा ।

---

करकः कमण्डलुः । चीवरं वल्कलम् । नास्ति अवलोकितेश्वरः बुद्धविशेषो यस्येति विरोधः । अनवलोकितः अदृष्टः ईश्वरः प्रभुर्येनेति परिहारः । "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" "शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" इति योगसूत्रे । आभिजात्यं महाकुलीनत्वम् ॥

गुरुमिव अभ्यागतं बहु मन्यमानः स्वेनासनेन 'आध्वमत्र' इति निमन्त्रयांचकार। पार्श्वे स्थितं च शिष्यमब्रवीत्––"आयुष्मन्, उपानय कमण्डलुना पादोदकम्" इति॥

राजा त्वचिन्तयत्—"अलोहः खलु संयमनपाशः सौजन्यमभिजातानाम्। स्थाने खलु तत्रभवान्गुणानुरागी ग्रहवर्मा बहुशो वर्णितवानस्य गुणान्" इति। प्रकाशं चाबभाषे—"भगवन्, दर्शनपुण्यानुगृहीतस्य मम पुनरुक्त इवायमार्यप्रयुक्तः प्रतिभात्यनुग्रहः। चक्षुष्प्रदानप्रसादस्वीकृतस्य च परकरणमिव आसनादिदानोपचारचेष्टितम्। संभाषणामृताभिषेकप्रक्षालितसकलवपुषश्च मे प्रदेशवृत्ति पाद्यमप्यपार्थकम्। आसतां भवन्तो यथासुखम्। आसीनोऽहम्" इत्यभिधाय क्षितावेवोपाविशत्॥

"अलंकारो हि परमार्थतः प्रभवतां प्रश्रयातिशयः, रत्नादिकस्तु शिलाभारः" इत्याकलय्य पुनः पुनरभ्यर्थ्यमानोऽपि यदा न प्रत्यपद्यत पार्थिवो वचनम्, तदा स्वमेवासनं पुनरपि भेजे भदन्तः। स्थित्वा च कांचित्कालकलामवादीत्—"अद्यप्रभृति न केवलमयमनिन्द्यः, वन्द्योऽपि प्रकाशितसत्सारः संसारः। किं नाम नालोक्यते जीवद्भिरद्भुतम्, येन रूपमचिन्तितोपनतमिदं दृक्पथमुपगतम्। एवंविधैरनुमीयन्ते जन्मान्तरावस्थितसुकृतानि हृदयोत्सवैः। इहापि जन्मनि दत्तमेवास्माकममुना तपःक्लेशेन फलमसुलभदर्शनं दर्शयता देवानां प्रियम्। आ तृप्तेः पीतममृतमीक्षणाभ्याम्। जातं निरुत्कण्ठं मानसं निर्वृत्तिसुखस्य। महद्भिः पुण्यैर्विना न विश्राम्यन्ति सज्जने त्वादृशि दृशः। सुदिवसः सः,

यस्मिन् जातोऽसि । सा सुजाता जननी, या सकलजीवलोक-जीवितजनकमजनयदायुष्मन्तम् । पुण्यवन्ति पुण्यान्यपि तानि, येषामसि परिणामः । भव्यः स पुरुषभावः, भवत्यवस्थितो यः । यत्सत्यं मुमुक्षोरपि मे पुण्यभाजमालोक्य पुनः श्रद्धा जाता मनुष्यजन्मनि । नेच्छद्भिरपि अस्माभिर्दृष्टः कुसुमायुधः । कृतार्थमद्य चक्षुर्वनदेवतानाम् । अमृतमयस्य भवतो वचसां माधुर्यं कार्यमेव । अस्य त्वीदृशे शैशवे विनयस्योपाध्यायं ध्यायन्नपि न संभावयामि भुवि । सर्वथा शून्य आसीदजाते दीर्घायुषि गुणग्रामः । धन्यः स भूभृत, यस्य वंशे मणिरिव मुक्तामयः संभूतोऽसि । एवंविधस्य च पुण्यवतः कथंचित्प्राप्तस्य केन प्रियं समाचराम इति पारिप्लवं चेतो नः । सकलवनचरसार्थसाधारणस्य कन्दमूलफलस्य गिरिसरिदम्भसो वा के वयम् । अपरोपकरणीकृतस्तु कायकलिरयमस्माकं सर्वस्वमवशिष्टमिष्टातिथ्याय । स्वायत्ताश्च विद्यन्ते विद्याविन्दवः कतिचित् । उपयोगं तु न प्रीतिर्विचारयति । यदि च नोपरुणद्धि कंचित्कार्यलवम्, अरक्षणीयाक्षरं वा कथनीयम्, तत्कथयतु भवान्, श्रोतुमभिलषति हृदयं सर्वमिदं नः । केन कृत्यातिभारेण भव्यो भूपितवान्भूमिमेतामभ्रमणयोग्याम् । कियदवधिर्वा शून्याटवीपर्यटनक्लेशः कल्याणराशेः । कस्माच्च संतप्तरूपेव ते तनुरियमसंतापार्हा विभाव्यते” इति ॥

---

कार्यमेव युक्तमेव । भूभृत् राजा, पर्वतश्च । वंशः कुलम्, वेणुश्च । मुक्तामयः मौक्तिकस्वरूपः, त्यक्तरोगश्च । पारिप्लवं चञ्चलम् । कायः कलिरिव कायकलिः दुष्ट शरीरम् । अनास्थया एवमुक्तिः ॥

राजा तु सादरतरमब्रवीत्—"आर्य, दर्शितसंभ्रमेणानेन मधुरमविसरं वर्षता वचसैव ते सर्वमनुष्ठितम्। धन्योऽस्मि यदेवमभ्यर्हितमनुपचरणीयमपि मान्यो मन्यते माम्। अस्य च महावनभ्रमणपरिक्लेशस्य कारणमवधारयतु मतिमान्—मम हि विनष्टनिखिलेष्टबन्धोर्जीवितानुबन्धस्य निबन्धनमेकैव यवीयसी स्वसावशेषा। सापि भर्तुर्वियोगाद्वैरिपरिभवभयाद्भ्रमन्ती कथमपि विन्ध्यवनमिदमाविशत्। अतस्तामन्वेष्टुं वयं सततमिमामटवी-मटामः। न चैनामासादयामः। कथयतु च गुरुरपि, यदि कदाचित्कुतश्चिद्वनचरतः श्रुतिपथमुपगता तद्वार्ता?" इति॥

अथ तच्छ्रुत्वा जातोद्वेग इव भदन्तः पुनरभ्यधात्—"धीमन्, न खलु कश्चिदेवंरूपो वृत्तान्तोऽस्मानभ्युपगतवान्। अभाजनं हि वयमीदृशानां प्रियाख्यानोपायनानां भवताम्" इति भाषमाण एव तस्मिन्, अकस्मादागत्य अपरः शमिनि वयसि वर्तमानः संभ्रान्तरूप इव पुरस्तादुपरचिताञ्जलिर्जातकरुणः प्रक्ष-रितचक्षुर्भिक्षुरभाषत—"भगवन् भदन्त, महत्करुणं वर्तते। बालैव बलवद्व्यसनाभिभूता कल्याणरूपा स्त्री वैश्वानरं विशति। संभावयतु तामप्रोषितप्राणां भगवान्। अभ्युपपद्यतां समुचितैः समाश्वासनैः। अनुपरतपूर्वं कृमिकीटमपि दुःखितं दयाराशेरार्यस्य गोचरगतम्" इति॥

राजा तु जातानुजाशङ्को गद्गदिकागृहीतकण्ठो बाष्पाय-

विसरः समूहः प्रवाह इति यावत्। यवीयसी कनीयसी॥

माणदृष्टिः पप्रच्छ—"पाराशरिन्, कियद्दूरे सा योषिदेवंजातीया? जीवेद्वा कालमेतावन्तम्? पृष्टा वा त्वया—'कासि, कस्यासि, कुतोऽसि, किमर्थं वनमिदमभ्युपगतासि, विशसि च किं निमित्तमनलम्' इति। आदितः प्रभृति कार्त्स्न्येन कथ्यमानमिच्छामि श्रोतुम्—कथमार्यस्य गता गोचरम्? आकारतो वा कीदृशी" इति ॥

तथाभिहितस्तु भूभुजा भिक्षुराचचक्षे—"महाभाग, श्रूयताम्—अहं हि प्रत्युषस्येवाद्य वन्दित्वा भगवन्तमनेनैव नदीरोधसा सैकतसुकुमारेण यदृच्छया विहृतवानतिदूरं। एकस्मिंश्च वनलतागहने गिरिनदीसमीपभाजि भ्रमरीणामिव हिमहतकमलाकरकातराणां रसितम् एकतानं नारीणां रुदितमधृतिकरमतिकरुणमाकर्णितवानस्मि। समुपजातकृपश्च गतोऽस्मि तं प्रदेशम्। दृष्टवानस्मि च दृषत्खण्डखण्डिताङ्गुलिगलल्लोहितेन च पार्ष्णिप्रविष्टशरशलाकाशल्यशूलसंकोचितचक्षुषा च अध्वनीनश्रमश्वयथुनिश्चलचरणेन च स्थाणवव्रणव्यथितगुल्फबद्धभूर्जत्वचा च विदारीदारिततनुदुकूलपल्लवेन च उत्कटवंशविटपकण्टककोटिपाटितकञ्चुककर्पटेन च केनचित्किसलयोपपादितातपत्रकृत्येन केनचित्कदलीदलव्यजनवाहिना केनचित्पाथेयीकृतमृणालपूलिकेन तत्र शोक-

एकतानम् एकरूपम् अनवरतं वेति शंकरः। पार्ष्णिः पादाधःप्रदेशः। प्रकृते तु लोचनप्रान्तपर इत्यन्ये। शलाकाः कृशदीर्घाः काण्डाः। शल्यम् अग्रम्। शूलं पीडा। अध्वानम् अलं गच्छति अध्वनीनः, अध्वनीनशब्दः प्रकृते अध्वजातपरः। स्थाणवं स्थाणुजनितम्। पूलिका पुञ्जः॥

विकलेनाबलानां चक्रवालेन परिवृताम्, आपत्कालेऽप्यमुच्यमानां लावण्येन, मृन्मयीमिव निश्चेतनतया, सलिलमयीमिव अस्रप्रस्रवणेन, पावकमयीमिव संतापसंतानेन, मरुन्मयीमिव निःश्वाससंपदा, वियन्मयीमिव निरवलम्बनतया, दग्धदशाविसंवादितां प्रत्यूषप्रदीपशिखामिव क्षामक्षामां पाण्डुवपुषम्, स्थितां तरुतले मरणे च, पतितां धात्र्युत्सङ्गे महानर्थे च, आकुलां केशकलापेन मरणोपायेन च, धृतमुखीं पाणिना मौनेन च, अलसामुन्मेषे, दक्षामश्रुमोक्षे, कृशां काये, पूरितां दुःखेन, रिक्तां सत्त्वेन, शून्यां हृदयेन. वसतिं व्यसनानाम्, आस्पदमापदाम्, कारणं करुणायां योषितम् । चिन्तितवानस्मि च—"चित्रमीदृशीमप्याकृतिमुपतापाः स्पृशन्ति" इति ॥

सा तु समीपगते मयि तदवस्थापि सबहुमानमानतमौलिः प्रणतवती । अहं तु प्रबलकरुणाप्रेर्यमाणस्तामालपितुकामः पुनः कृतवान्मनसि—"कथमिव महानुभावामेनामामन्त्रये? वत्से इति अतिप्रणयः । मातः इति चाटु । भगिनि इति आत्मसंभावना । देवि इति परिजनालापः । आयुष्मति इति अवस्थायामप्रियम् । कल्याणिनि इति दशायां विरुद्धम् । बाले इति अगौरवोपेतम् । अपि च, कासि इति अनभिजातम् । किमर्थं रोदिषि इति दुःखकारणस्मरणकारि । मा रोदीः इति शोककारणमनपनीय न शोभते । समाश्वसिहि इति किमाश्रित्य? इत्येवं चिन्तयत्येव

---

अस्रम् अश्रु । दग्धदशा दुरवस्था, प्लुष्टा वर्तिका च । विसंवादिता विशोभीकृता ॥

मयि, तस्मात्क्षणादुत्थायान्यतरा योषित् शोकविक्लबा समुपसृत्य, कतिपयपलितशारं शिरो नीत्वा महीतलम्, अश्रुबिन्दुभिश्चरण-युगलं दहन्ती मम, अभिहितवती—'भगवन्, सर्वसत्त्वानु-कम्पिनी प्रायः प्रव्रज्या । करुणाकुलगृहं च भगवतः शाक्यमुनेः शासनम् । परलोकसाधनं च धर्मो मुनीनाम् । प्राणरक्षणाच्च न परं पुण्यजातं जगति गीयते जनेन । अनुकम्पाभूमयः प्रकृत्यैव युवतयः, किंपुनर्विपदभिभूताः । साधुजनश्च सिद्धिक्षेत्रमार्तवच-साम् । इयं नः स्वामिनी मरणेन पितुः, अभावेन भर्तुः, प्रवा-सेन च भ्रातुः, भ्रंशेन च शेषस्य बान्धववर्गस्य, अतिमृदुहृदय-तया अनपत्यतया च निरवलम्बना, परिभवेन च नीचारातिकृतेन अमुना च महाटवीपर्यटनक्लेशेन कदर्थितसौकुमार्या, दग्धदैवदत्तै-रेवंविधैर्बहुभिरुपर्युपरि व्यसनैर्विक्लवीकृतहृदया, दारुणं दुःखम-पारयन्ती सोढुम्, अग्निं प्रविशति । परित्रायताम् । आर्योऽपि तावदसह्यशोकापनयनोपायोपदेशनिपुणां व्यापारयतु वाणीमस्याम्' इति चातिकृपणं व्याहरन्तीमहमुत्थाप्योद्विग्नतरः शनैरभिहितवान् —'आर्ये, यथा कथयसि, तथा । असमद्गिरामगोचरोऽयमस्याः शोकः । शक्यते चेन्मुहूर्तमात्रमपि त्रातुम्, उपरिष्टान्न व्यर्थेयम-भ्यर्थना भविष्यति । मम हि गुरुरपर इव भगवान्सुगतः समी-पगत एव । कथिते मयास्मिन्वृत्तान्ते, नियतमागमिष्यति परम-दयालुः । दुःखान्धकारपटलभिदुरैश्च सौगतैः सुभाषितैः स्वकैश्च दर्शितनिदर्शनैर्नानागमगुरुभिर्गिरां कौशलैः कुशलशीलामेनां प्रबोध-

---

निदर्शनं दृष्टान्तः ॥

पदवीमारोपयिष्यति' इति । तच्च श्रुत्वा 'त्वरतामार्यः' इत्यभिदधाना सा पुनरपि पादयोः पतितवती । सोऽहमुपगत्य त्वरमाणो व्यतिकरमिममतिकरुणमत्रभवते गुरवे निवेदितवान्" इति ॥

अथ भूभृत्समवधार्य तद्भाषितम्, अश्रुतेऽपि स्वसुर्नाम्नि निम्नीकृतमना मन्युना, सर्वाकारसंवादिन्या दशयैव दूरीकृतसंदेहः, श्रमणाचार्यमुवाच—"आर्य, नियतं सैवेयमनार्यस्यास्य जनस्यातिकठिनहृदयस्य मन्दभाग्यस्य भगिनी । विदीर्यमाणं मे हृदयमेवं निवेदयति" इत्युक्त्वा तमपि श्रमणमभ्यधात्—"आर्य, उत्तिष्ठ । दर्शय । क्वासौ । सुप्रभूतप्राणपरित्राणपुण्योपार्जनाय यामः । यदि कथंचिज्जीवन्तीं संभावयामः" इति भाषमाण एवोत्तस्थौ ॥

अथ समग्रशिष्यवर्गानुगतेन आचार्येण समस्तेन सामन्तलोकेन च पश्चादनुगम्यमानः, पुरस्ताच्च तेन शाक्यपुत्रीयेण प्रदर्श्यमानवर्त्मा पद्भ्यामेव तं प्रदेशमविरलैः पदैः पिबन्निव प्रावर्तत । क्रमेण च समुपगतः शुश्राव लतावनान्तरितस्य मुमूर्षोर्भिहतः स्त्रैणस्य तत्कालोचितानेकप्रकारानालापान्—"भगवन् धर्म, धाव शीघ्रम् । क्वासि कुलदेवते । क्वनु खलु प्रोषिता पुष्पभूतिकुटुम्बिनी लक्ष्मीः । भगवन्, भक्तजने संज्वरिणि सुगत, सुप्तोऽसि । पतङ्ग, प्रसीद, पाहि पतिव्रतामशरणाम् ।

---

व्यतिकरः विषयः । निम्नीकृतं भग्नम् । मन्युः दुःखम् । शाक्यपुत्रस्य बुद्धस्य अयं शाक्यपुत्रीयः । मुमूर्षुः मरणाशङ्काविषयः । आशङ्कायां सन् । पतङ्गः सूर्यः ॥

अयत्नरक्षित कृतघ्न चारित्रचाण्डाल, न रक्षसि राजपुत्रीम् । व्यपेहि पाप पावक स्त्रीघातनिर्घृण ज्वलन्न लज्जसे । भ्रातर्वात, दासी तवास्मि । संवादय द्रुतं देवीदाहं देवाय दुःखितजनार्तिहराय हर्षाय । विजने वने कमाक्रन्दामि, कस्मै कथयामि, कमुपयामि शरणम्, कां दिशं प्रतिपद्ये ? करोमि किमभागधेया ? गान्धारि, गृहीतोऽयं लतापाशः । सुतनु, तनूनपाति पतिष्यसि त्वमपि । विजये, वीजय कृशानुम् । सुभद्रे, भद्रमस्तु ते परलोकगमनम् । कलिङ्गसेने, अयं पश्चिमः परिष्वङ्गः । वामनिके, वामेन मे स्फुरितमक्ष्णा । हरिणि, हेषितमिव हयानामुत्तरतः । कस्येदमातपत्रमुच्चमत्र पादपान्तरेण प्रभावति, विभाव्यते । कुरङ्गिके, केन सुगृहीतनाम्नो नाम गृहीतममृतमयमार्यस्य । देवि, दिष्ट्या वर्धसे देवस्य हर्षस्यागमनमहोत्सवेन" इत्येतच्च श्रुत्वा सत्वरमुपससर्प । ददर्श च मुह्यन्तीमग्निप्रवेशायोद्यतां राजा राज्यश्रियम् । आललम्बे च मूर्च्छामीलितलोचनाया ललाटं हस्तेन तस्याः ससंभ्रमम् ॥

अथ तेन भ्रातुः प्रेयसः प्रत्यानयतेव कुतोऽपि जीवितमाह्लादकेन हस्तस्पर्शेन सहसैव समुन्मिमील राज्यश्रीः । तथा चासंभावितागमनस्य अचिन्तितदर्शनस्य सहसा प्राप्तस्य भ्रातुः कण्ठे समाश्लिष्य, तत्कालाविर्भावनिर्भरेण दुःखसंभारेण स्थूलप्रवाहमुत्सृजन्ती बाष्पवारि लोचनाभ्याम्, "हा तात, हा अम्ब, हा सख्यः" इति व्याहरन्ती, "वत्से, स्थिरा भव त्वम्" इति भ्रात्रा करस्थगितमुखी समाश्वास्यमानापि, "कल्याणिनि,

कुरु वचनमग्रजस्य गुरोः" इत्याचार्येण याच्यमानापि, "स्वामिनि, भ्रातरमवेक्षस्व" इति परिजनेन विज्ञाप्यमानापि, प्रभूतमन्युभारभरितान्तःकरणा, करुणकाहलेन स्वरेण अकलितकालमतिचिरं रुरोद । विगते च मन्युवेगे वह्नेः समीपादाक्षिप्य भ्रात्रा नीता निकटवर्तिनि तरुतले निषसाद ॥

शनैराचार्यस्तु तदा हर्ष इति विज्ञाय विवर्धितादरः सुतराम्, मुहूर्तमिवातिवाह्य निभृतसंज्ञाज्ञापितेन शिष्येणोपनीतं नलिनीदलैः स्वयमादाय नृपो मुखप्रक्षालनायोदकमुपनिन्ये । नरेन्द्रोऽपि सादरं गृहीत्वा प्रथमम् अनवरतरोदनाताम्रं स्वसुश्चक्षुरक्षालयन्, पश्चादात्मनः । प्रक्षालितमुखशशिनि च महीपाले सर्वतो निःशब्दः संबभूव सकलो लिखित इव लोकः । ततो नरेन्द्रो मन्दमन्दमब्रवीत्स्वसारम्—"वत्से, वन्दस्वात्रभवन्तं भदन्तम् । एष ते भर्तुर्द्वितीयं हृदयम्, अस्माकं च गुरुः" इति । राजवचनात्तु राजदुहितरि पतिपरिचयश्रवणोद्घातेन पुनरानीतनेत्राम्भसि नमन्त्याम्, आचार्यः किंचित्परावृत्तनयनो दीर्घं निशश्वास । स्थित्वा च क्षणमेकं प्रदर्शितप्रश्रयो मृदुवादी मधुरया वाचा व्याजहार—"कल्याणराशे, अलं रुदित्वातिचिरम् । राजलोको नाद्यापि रोदनान्निवर्तते । क्रियतामवश्यकरणीयः स्नानविधिः । स्नात्वा च गम्यतां तामेव भूयो भुवम्" इति ॥

अथ भूपतिरनुवर्तमानो लौकिकमाचारम् आचार्यवचनं च, उत्थाय स्नात्वा गिरिसरिति, सह स्वस्रा तामेव भूमिमया-

---

काहलः महान् । उद्घातः आरम्भः, अभिघात इत्यन्ये ॥

सीत् । तस्यां च सपरिजनां प्रथममाहितावधानः पार्श्ववर्ती परवर्तीं शुचा प्रयत्नप्रतिपन्नाभ्यवहारकरणां भगिनीमभोजयत् । अनन्तरं च स्वयमाहारस्थितिमकरोत् । भुक्तवांश्च बन्धनात्प्रभृति विस्तरतः स्वसुः कान्यकुब्जाद्गौडसंभ्रमम्, गुप्तितो गुप्तनाम्ना कुलपुत्रेण निष्कासनम्, निर्गतायाश्च राज्यवर्धनमरणश्रवणम्, श्रुत्वा चाहारनिराकरणम्, अनाहारपराहतायाश्च विन्ध्याटवीपर्यटनखेदम्, जातनिर्वेदायाः पावकप्रवेशोपक्रमणं यावत्सर्वमशृणोद्व्यतिकरं परिजनतः ॥

ततः सुखासीनमेकत्र तरुतले, भगिनीद्वितीयं राजानमाचार्यः समुपसृत्य वक्तुमुपचक्रमे—"श्रीमन्, आकर्ण्यताम् । आख्येयमस्ति नः किंचित् । अयं हि यौवनोन्मादात्ताराराज्ञो धिषणस्य धर्मपत्नीं तारां नामापजहार, नाकतश्च पलायांचक्रे । चिराच्च कथंचित्सर्वगीर्वाणवाणीगौरवाद्गिरां पत्युः पुनरपि प्रत्यर्पयामास ताम् । एकदा तु शैलादुदयादुदयमानो विमले वारिणि वरुणालयस्य संक्रान्तमात्मनः प्रतिबिम्बं विलोकितवान् । दृष्ट्वा च तदा सस्मार सस्मरः स्मेरगण्डस्थलस्य ताराया मुखस्य । मुमोच च मन्मथोन्मादमथ्यमानमानसः स्थवीयसो बाष्पवारिबिन्दून् । अथ पततस्तानुदन्वति समस्तानेव आचेमुर्मुक्ताशुक्तयः । तासां च कुक्षिकोशेषु मुक्ताफलीभूतानवाप तान्कथमपि रसातलनिवासी

---

अभ्यवहारः भोजनम् । गुप्तिः कारागृहम् । वरुणालयः समुद्रः । सस्मार मुखस्येत्यत्र "अधीगर्थ—" इति षष्ठी । उन्मादः चित्तविभ्रमः । स्थवीयसः स्थूलतरान् ॥

वासुकिर्नाम विषमुचामीशः। स च तैर्मुक्ताफलैरेकावलीमकल्पयत्। चकार च मन्दाकिनीति नाम तस्याः। सा च भगवतः सोमस्य सर्वासामोषधीनामधिपतेः प्रभावादत्यन्तविषघ्नी, हिमामृतसंभवत्वाच्च स्पर्शेन सर्वसत्त्वसंतापहारिणी बभूव। स तां सर्वदा विषोष्मशान्तये वासुकिः पर्यधत्त। समतिक्रामति च कियत्यपि काले कदाचित्तामेकावलीं तस्मान्नागराजान्नागार्जुनो नाम नागैरेवानीतः पातालतलं भिक्षुरभिक्षत, लेभे च। निर्गत्य रसातलात् त्रिसमुद्राधिपतये सातवाहननाम्ने नरेन्द्राय सुहृदे स ददौ ताम्। सा चास्माकं कालेन शिष्यपरंपरया कथमपि हस्तमुपगता। यद्यपि च परिभव इव भवति भवादृशां दत्रिम उपचारः, तथाप्योषधिबुद्ध्या बुद्धिमता सर्वसत्त्वराशिरक्षाप्रवृत्तेन रक्षणीयशरीरेणायुष्मता विषरक्षापेक्षया गृह्यताम्" इत्यभिधाय भिक्षोरभ्याशवर्तिनश्चीवरपटान्तसंयतां मुमोच तामेकावलीं मन्दाकिनीम्॥

राजा तु मांसलैस्तस्याः संमुखैर्मयूखैराकुलीक्रियमाणं मुहुर्मुहुरुन्मीलयन्निमीलयंश्च चक्षुः कथमपि ददर्श। पश्यंश्चैतां विस्मयमाजगाम मनसा सुचिरम्। आचार्यस्तु तामुद्धृत्य बबन्ध बन्धुरे स्कन्धभागे भूपतेः॥

अथ नरपतिरपि प्रीतिमुपदर्शयन्प्रत्यवादीत्—"आर्य, रत्नानामीदृशानामनर्हाः प्रायेण पुरुषाः। तपःसिद्धिरियमार्यस्य देवताप्रसादो वा। के च वयमिदानीमात्मनोऽपि, किमुत ग्रहणस्य

---

एकावली एकसरा मौक्तिकमाला॥

प्रत्याख्यानस्य वा। दर्शनात्प्रभृति प्रभूतगुरुगुणगणहृतेन हृदयेन परवन्तो वयम्। संकल्पितमिदम् आ मरणादार्योपयोगाय शरीरम्। अत्र कामचारो वः कर्तव्यानाम्" इति ॥

समतिक्रान्ते च कियत्यपि काले, लब्धविस्रम्भा राज्यश्रीस्ताम्बूलवाहिनीं पत्रलतामाहूयोपांशु किमपि कर्णमूले शनैरादिदेश। दर्शितविनया च पत्रलता पार्थिवं व्यज्ञापयत्—"देव, देवी विज्ञापयति—न स्मराम्यार्यस्य पुरतः कदाचिदुच्चैर्वचनमपि, कुतो विज्ञापनम्। इयं हि शुचामसह्यता व्यापारयन्ती हतदैवदत्तादेशा शिथिलयति विनयम्। अबलानां हि पतिरपत्यं वावलम्बनम्। उभयविकलानां तु दुःखानलेन्धनायमानं प्राणितम् अशालीनत्वमेव केवलम्। आर्यागमनेन च कृतोऽपि प्रतिहतो मरणप्रयत्नः। अतः काषायग्रहणाभ्यनुज्ञयानुगृह्यतामयमपुण्यभाजनं जनः" इति। जनाधिपस्तु तदाकर्ण्य तूष्णीमेवावातिष्ठत ॥

अथाचार्यः सुधीरमभ्यधात्—"आयुष्मति, शोको हि नाम पर्यायः पिशाचस्य। तारुण्यं तमसः। अयमप्रतिबोधो निद्राप्रकारः। अयमबुधसेवितो ग्रहवर्गः। तदस्य अजस्रस्राविणो हृदयमहाव्रणस्य जीवितापहारदक्षस्य अनभ्रवज्रपातस्य स्फुरदनवद्यविद्याविद्युदुद्योतमानानि भूरिकाव्यकथाकठोराणि विदुषामपि हृदयानि नालं सोढुमापातम्, किमुत नवनवमालिकाकुसुमकोमलानां सरसबिसतन्तुदुर्बलमबलानां हृदयम्। एवं सति

अशालीनत्वं धाष्ट्र्यम्। बुध. पण्डितः, चन्द्रपुत्रश्च ॥

सत्यव्रते, वद किमत्र क्रियते । कतम उपालभ्यते । कस्य पुर उच्चैराक्रन्द्यते, हृदयदाहि दुःखं वा ख्याप्यते । सर्वमाक्षिणी निमील्य सोढव्यममूढेन मर्त्यधर्मणा । पुण्यवति, पुरातन्यः स्थितयः एताः केन शक्यन्तेऽन्यथाकर्तुम् । तृप्तिमशिक्षिता च भगवतः सर्वभूतभुजो बुभुक्षा मृत्योः । अतिद्रुतवाहिनी चानित्यतानदी । सर्वमात्मनोऽनीश्वरं विश्वं नश्वरम् । एवमवधृत्य नात्यर्थमेवार्हसि मेधाविनि, मृदुनि मनसि तमसः प्रसरं दातुम् । एको हि प्रतिसंख्यानक्षण आधारीभवति धृतेः । अपि च दूर-गतेऽपि हि शोके नन्विदानीमपेक्षणीय एवायं ज्येष्ठः पितृकल्पो भ्राता भवत्या गुरुः । इतरथा को न बहुमन्येत कल्याणरूपमीदृशं संकल्पमत्रभवत्याः काषायग्रहणकृतम् । अखिलमनोज्वरप्रशमन-कारणं हि भगवती प्रव्रज्या । ज्यायः खल्विदं पदमात्मवताम् । महाभागस्तु भिनत्ति मनोरथमधुना । यदयमादिशति, तदेवानुष्ठे-यम् । यदि भ्रातेति, यदि ज्येष्ठ इति, यदि वत्सल इति, यदि गुणवानिति, यदि राजेति, सर्वथा स्थातव्यमस्य नियोगे" इत्युक्त्वा व्यरंसीत् ॥

उपरतवचसि च तस्मिन्निजगाद नरपतिः—"आर्य-मपहाय कोऽन्य एवमभिदध्यात् ? अनभ्यर्थितदैवनिर्मिता हि विषमविपदवलम्बनस्तम्भा भवन्तो लोकस्य । स्नेहार्द्रमूर्तयो मोहा-न्धकारध्वंसिनश्च धर्मप्रदीपाः । किंतु प्रणयप्रदानदुर्ललिता दुर्लभ-

---

मर्त्यस्य धर्मो यस्य सः मर्त्यधर्मा । "धर्मादनिच् केवलात्" । मेधा अस्या अस्तीति मेधाविनी । प्रतिसंख्यानं विवेकः । दुर्ललिता उच्छृङ्खला ॥

मपि मनोरथमतिप्रीतिरभिलषति । अतः किंचिदर्थये भदन्तम्—इयं नः स्वसा बाला च बहुदुःखखेदिता च सर्वकार्यावधीरणोपरोधेनापि यावल्लालनीया नित्यम् । अस्माभिश्च भ्रातृवधापकारिरिपुकुलप्रलयकरणोद्यतस्य बाहोर्विधेयैर्भूत्वा सकललोकप्रत्यक्षं प्रतिज्ञा कृता । पूर्वावमाननाभिभवमसहमानैरर्पित आत्मा कोपस्य । अतो नियुङ्क्ष्वां कियन्तमपि कालमात्मानमार्योऽपि कार्ये मदीये । अद्य प्रभृति यावदयं जनो लघयति प्रतिज्ञाभारम्, आश्वासयति च तातविनाशदुःखविक्लवाः प्रजाः, तावदिमामत्रभवतः कथाभिश्च धर्म्याभिः कुशलप्रतिबोधविधायिभिरुपदेशैश्च अस्मत्पार्श्वोपयायिनीमेव प्रतिबोध्यमानामिच्छामि । इयं तु ग्रहीष्यति मयैव समं समाप्तकृत्येन काषायाणि । अर्थिजने च किमिव नातिसृजन्ति महान्तः । सुरनाथमात्मास्थिभिरपि यावत्कृतार्थमकरोद्धैर्योदधिर्दधीचः । मुनिनाथोऽपि अनपेक्षितात्मस्थितिः, अनुकम्पेति कृत्वा कृपावानात्मानं वठरसत्त्वेभ्यः कतिकृत्वो न दत्तवान् । अतः परं भवन्त एव बहुतरं जानन्ति" इत्युक्त्वा तूष्णीं बभूव भूपतिः ॥

भूयस्तु बभाषे भदन्तः—"भव्या न द्विरुच्चारयन्ति वाचम् । चेतसा प्रथममेव प्रतिग्राहिता गुणास्तावकाः कायबलिममुना जनेन । उपयोगस्तु निरुपयोगस्यास्य लघुनि गुरुणि वा

---

यावत् कार्त्स्न्येन । यावच्छक्यमिति केचित् । लघयति लघूकरोति । धर्मात् अनपेताः धर्म्याः । वठरसत्त्वानि दुष्टप्राणिनः । भव्याः श्रेष्ठाः । "भव्यगेय—" इति निपातितोऽयम् ॥

कृत्ये गुणवदायत्तः" इति। अथ तथा तस्मिन्नभिनन्दितप्रणये प्रीयमाणः पार्थिवः, तत्र तामुषित्वा विभावरीम्, उषसि वसनालंकारादिप्रदानपरितोषितं विसर्ज्य निर्घातम्, आचार्येण सह स्वसारमादाय, प्रयाणकैः कतिपयैरेव कटकमनुजाह्नवि निविष्टं प्रत्याजगाम॥

तत्र च राज्यश्रीप्राप्तिव्यतिकरकथां कथयत एव प्रणयिभ्यो रविरपि ततार गगनतलम्। बहुलमधुपङ्कपिङ्गलः पङ्कजाकर इव संचुकोच चक्रवाकवल्लभो वासरः। अवसिते च संध्यासमये, समनन्तरमपरिमितयशःपानतृषिताय मुक्ताशैलशिलाचषक इव निजकुलकीर्त्या, कृतयुगकरणोद्यताय आदिराजराजतशासनमुद्रानिवेश इव राज्यश्रिया, सकलद्वीपजिगीषाचलिताय श्वेतद्वीपदूत इव चायत्या, श्वेतभानुरुपानीयत निशया नरेन्द्राय॥

॥ इति भट्टबाणविरचिते हर्षचरिते अष्टम उच्छ्वासः॥

हर्षचरितसंग्रहः समाप्तः॥



---

मधुपङ्केन मधुपङ्कवच्च पिङ्गलः। चषकः पानपात्रम्। राज्यश्रीः राज्यलक्ष्मीः। आयतिः उत्तरः कालः, आगामि शुभदैवमिति यावत्॥

# GLOSSARY.

*This follows the Text order.*

वृत्त Character, round
गुण (गुणिन्) Merit, thread
नामाभिहार, पर्याय Synonym
गुरु Great, Brihaspati
विशाल Broad, a King
बुध Wise, Mercury
प्रतीहारी Portress
परिव्राट्, मस्करिन् Ascetic
कार्पटिक Pilgrim
आकर Mine
श्रीफल Bilva fruit
उपायन Present
अजिन Skin
स्वापतेय, Property, wealth
परिचार A sheath
कल्पः Procedure
अर्गल Bolt
संकेत Agreement
उत्तानशय Lying supinely
उष्णीष Turban
कौणप Fiend
अवलेप Conceit
प्रकोष्ठ Fore-arm
काकोदर Serpent
हेति Weapon
चर्मफलक Shield
अर्धोरुक Underwear (equivalent of modern shorts)
कक्ष्या Sash
अवष्टम्भ Courage
मुद्गर Hammer
तोरण Porch
पञ्जर Cage
धात्री Nurse
पल्लवक Libertine, sprout
विप्रलम्भक Cheat
उपधा Trial or test of honesty
अभिजन Descent
पटवितान Canopy
औत्सुक्य Ardent desire
विविक्त Solitary
कौतुकगृह Bridal chamber
सुधा Lime
शिखा Flame, top

लाज Fried grain
विभावसु Fire
उपधान Pillow
वासगृह Bed-chamber
मृगया Hunt
श्वापद Wild beast
वासतेयी Night
परिबर्ह Royal insignia
पर्याण Saddle
परिवर्धक Groom
पण्य Merchandise
यातुधान Fiend
स्कन्धावार Capital
विष्कम्भ Support
यमपट्टिक Yamaloka-Inferno showman
चरु Oblation of rice
प्रघण Porch before the door of a house
क्वाथ Decoction
अवग्रहणी Vestibule
पक्षद्वार Side-door
जृम्भिका Yawning
अनुबन्धिका Pain in the joints or hiccough
उष्ट्र Camel
प्रतिकर्म Personal decoration

व्यावक्रोशी Mutual cawing
उत्पात Portent
कुट्टिम Pavement
आमन्त्रण Bidding good-bye
बभ्रु Reddish brown
कौलेयक A hound
गद्गदिका Sobbing
शौण्ड Skilled
स्नेह Love, oil
भूति Ash, prosperity
विश्वस्ता Widow, confidant
भीमरथी The seventh night in the seventh month of the 77th year of a man's life.
अपदान Noble deed
कृकवाकु Cock
निषादिन् Rider
मन्दुरा Stable
अजिर Quadrangle
निरय Hell
कीकस Bone
आकर Crowd
चतुश्शाल Quadrangle enclosed by four buildings
वितर्दिका Balcony
पर्यङ्किका A small sofa

पारावार Ocean

प्रस्रवण Stream

निस्त्रिंश Sword

अवग्रह Drought

धन्वन् Desert

अङ्गार Burning cinder

कर्मान्तिक Servant

निगड Fetters

अश्ववार An officer of cavalry

आशीविष Serpent

विग्रह Battle

अभिचार Magical spell for securing some malevolent purpose

प्रधन War

शल्य Dart

पोटा Hermaphrodite

महासंधिविग्रहाधिकृत The chief minister entrusted with affairs of war and peace

अभिसर Attendant (Thief)

प्रचार Pasturage

उदवसित House

जातरूप Gold

शफ Hoof

अर्बुद One hundred [millions

ग्रामाक्षपटलिक Village Munsif

करणि Clerk (karnam)

सीर Plough

क्रोश A measure of distance equal to $\frac{1}{4}$th of a yojana

स्कन्धावार The army

कटक Camp, army

दन्तवीणा Clattering of teeth

शलाका Rib

निचोलक Case

कार्म Servant

प्रतिकौशलिका A present in return

एकपिङ्ग Kubera

अभवनिः An end

राजिल Poisonless snake

पुलाक Bad grain

अनुपदिन् Seeker

बुस Chaff

गोवाट Cow-pen

वत्सरूपक Young calves

कुठार Axe

करहाट Fibrous root of a lotus

प्रपा Water-arbour

व्योकार Blacksmith
प्रातिवेश्यविषय Neighbouring district
स्थविर Old man
पाटच्चर Robber
पटच्चर Rag
वेणुपोटदल Slips of bamboo
आटविकसामन्त A tributary chief in the forest
कज्जल Collyrium
काचर Tawny
काचमणि Crystal
कर्णिका Ear-ring
क्षतज Blood
चिबुक Chin
पाकल Fever of elephant
पल्ली (Forest) Hamlet
स्वस्रीय Sister's son
गव्यूति Two krosas
वैधेय Idiot
प्रव्रज्या Asceticism
चैत्य Monument
आलोक Light, enlightenment, a Buddhistic book
पारावत Pigeon
करक Water pot

चीवरपटल Red robe
परकरणमिव Making a stranger of one
भूभृत् King, Mountain
वंश Family, Bamboo
कायकलि Wretched body
भदन्त Buddhist mendicant
एकतान Monotonous, incessant
शूल Pain
अध्वनीन Caused by the fatigue of journey
गुल्फ Ankle
पूलिका Bundle
पलितशार Variegated with gray hair
श्रमण A Buddhist ascetic
पतङ्ग The Sun
हेषित Neighing
काहल Excessive
निर्वेद Despair
स्थितयः Ordinances
प्रतिसंख्यान Discrimination
वठरसत्त्व Wicked animals
चषक Goblet
राजतशासनमुद्रानिवेश The stamp of the silver seal of authority

